अलसीप्रभवं तैलं घनं मधुरपिच्छलम्
विपाके चोष्णवीर्यञ्च वातश्लेष्मनिवारणम्  १०

एरण्डजं घनञ्चापि शीतमेव मृदु स्मृतम्
हृद्बस्तिजङ्घाकटचूरुशूलानाहविबन्धनुत्  ११

आनाहाष्ठीलवातासृक्प्लीहोदावर्त्तशूलिनाम्
हन्ति वातविकाराणां विदध्याच्च प्रशान्तये  १२

यावन्तः स्थावराः स्नेहाः समासैन प्रकीर्तिताः
सर्वे तैलेगुणा ज्ञेयाः सर्वे चानिलनाशनाः  १३

सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं प्रशस्यते  १४

तैलमेरण्डजं बल्यं गुरूष्णं मधुरं तथा
तीक्ष्णोष्णं पिच्छलं विस्रं रक्तमेरण्डसम्भवम्  १५

कुसुम्भतैलमुष्णन्तु विपाके कटुकं गुरु
विदाहकं विशेषेण सर्वदोषप्रकोपनम्  १६

कफोद्घातानि तैलानि यान्युक्तानि च कानिचित्
गुणं कर्म च विज्ञाय कफवातानि निर्दिशेत्  १७

सहकारतैलमीषत्तिक्तमतिसुगन्धि वातकफहरं सूक्ष्मम्
मधुरं कषायमेवं नातिरक्ते पित्तकरञ्च  १८

सौवर्चलेंगुदीपीलुशिंशपासारसम्भवम्
सरलागुरुदेवादिपादपसम्भवन्तु यत्  १९

तम्बुरूत्थं करञ्जोत्थं ज्योतिष्मत्युद्भवं तथा
अर्शः कुष्ठकृमिश्लेष्मशुक्रमेदोऽनिलापहम्  २०

करञ्जारिष्टके तिक्ते नात्युष्णेन विनिर्दिशेत्  २१

कषायं मधुरं तिक्तं सारणं व्रणशोधनम्
अच्छातिमुक्तकाच्छोडनालिकेरमधूकजम्  २२

त्रपुष्युर्वारुकूष्माण्डश्लेष्मातकपीलूद्भवम्
वातपित्तहृदर्शोघ्नं श्लेष्मलं गुरु शीतलम्  २३

पित्तश्लेमप्रशमनं श्रीपर्णीकिंशुकोद्भवम्  २४

वसा मत्त च वातघ्नी बलपित्तकफप्रदा
सौकरी माहिषी वसा वातला श्लेष्मवर्द्धनी  २५

सर्पनकुलगौधेया लेपने व्रणकुष्ठहा
मत्स्यशिशुमारमकरग्राहादीनां वसाप्येवम्
सा विसर्पहरा च हृद्या कुष्ठरोगविनाशिनी च  २६

इति आत्रेयभाषिते हारीतोत्तरे प्रथमस्थाने तैलवसावर्गो नाम
चतुर्दशोऽध्यायः  १४

## पञ्चदशोऽध्यायः
### धान्यवर्गः

रक्तशालिर्महाशालिः कलमा षष्टिकापरा
खञ्जरीटापसाही च जीरकान्या कपिञ्जला  १

सौगन्धी शूकला चान्या बिलवासी कचोरका
गरुडा रुक्मवन्ती च कलमान्या तथापरा
बिल्वजा मागधी पीता ता अष्टादश शालयः  २

रक्तशालिस्त्रिदोषघ्नी चक्षुष्या मूत्ररोगहा
महाशालिर्गुरुर्वृष्या चक्षुष्याबलवर्द्धिनी  ३

शीता गुरुस्त्रिदोषघ्नी मधुरापरषष्टिका ४

जीरका वातपित्तघ्नी कलमा श्लेष्मपित्तहा
कपिञ्जला श्लेष्मला स्यान्मागधीकफवातला ५

बिलवासी गुरुश्चापि पित्तघ्नी शुक्रवर्द्धिनी
शूकला पित्तवातघ्नी कचोरा पित्तनाशिनी ६

गरुडान्या च पातघ्नी पित्तमूत्रगदापहा
रुक्मवन्ती लघू रुचिबलपुष्टिकरा मता ७

कलमान्या लघुः पथ्या वातश्लेष्मविवर्द्धिनी
बिल्वजा मागधी पीता सामान्यास्तागुणागुणैः ८

रुचिकृद्बलकृन्मूत्रदोषघ्नी च श्रमापहा
दग्धग्रामाचले जाताः शालयो लघुपाकिनः ९

सुपथ्या बद्धविरामूत्रा रूक्षाः श्लेष्मापकर्षिणः
केदारप्रभवा वृक्षा वातपित्तविनाशिनः १०

रक्तपित्तविकारघ्ना वातलाः कफकारकाः
देशे देशे विभिन्नानि नामानि परिलक्षयेत् ११

समान्गुणैश्च सर्वास्तान्भूमिभागोद्भवान्विदुः १२

शालयश्छिन्नरोहाश्च मूत्रला वातलाहिमाः १३

श्यामाकः कोद्रवः कराडूर्मर्कटी कपिकच्छुरा
क्षुद्रधान्यमिदं प्रोक्तं शृणु पुत्र प्रवक्ष्यते १४

श्यामाकः शोषणो रूक्षो वातलः कफवारणः
कोद्रवो रूक्षो ग्राही श्याद्रक्तपित्तविशोषणः १५

नाधिककफकृत् प्रोक्तो रुच्यः स्वादुः प्रकीर्त्तितः १६

विदलान्नानि वक्ष्यामि शृणु पुत्र यथाक्रमम्
यवगोधूमचणका माषो मुद्गाढकी तथा १७

मकुष्टकः कुलत्थश्च मसूरस्त्रिपुटस्तथा
निष्पावकःकलायश्च विदलान्नं प्रकीर्त्तितम् १८

रूक्षः शीतो गुरुः स्वादुः कषायो मधुरो यवः
वृष्यो ग्राही कफघ्नश्च स्यात्पित्तश्वासकासनुत् १९

मधुरो गुरुविष्टम्भी वृष्यो बल्योऽथ बृंहणः
ईषत्कषायो मधुरो गोधूमः स्यात्त्रिदोषहा २०

तिलो विपाके मधुरो बलिष्ठः स्निग्धो व्रणालेपनपथ्य उक्तः
बल्योऽग्निमेधाजननो वरेण्यो मूत्रस्य दोषहरणो गुरुश्च २१

तिलेषु सर्वेष्वसितः प्रधानो मध्यः सितो हीनतरास्तथान्ये २२

रक्ते कफे पीनसके तु कण्ठे गलामये वातरुजे सपित्ते
शीतः प्रतिश्यायकृमीन्निहन्ति शुष्कस्तथार्द्रश्चणकः प्रशस्तः २३

स्निग्धोऽथ वृष्यो मधुरश्च बल्यो मरुत्कफानां परिबृंहणश्च
पाकेऽम्लकोष्णो विदितो हिमश्च माषोऽथ हृद्यः कथितो नरैश्च २४

शीतः कषायो मधुरो लघुः स्यात्पैत्तास्रजदोषहरः सरश्च
विपाकतोऽसौ कटुकप्रधानो मुद्गस्तथान्यः कथितोऽभिरम्यः २५

मृदुःकषाया च सरक्तपित्तं वातं कफं हन्ति मुखव्रणश्च
गुल्मज्वरारोचककासछर्दिहृद्रोगदुर्नामहराढकी स्यात् २६

सरक्तपित्तकफवातहन्ता चोष्णः कषायो मधुरः प्रदिष्टः

ग्राही सुशीतो मुदकीलगुल्मं मकुष्टकः सर्वगदान्निहन्ति २७

उष्णो जयेन्मारुतपीनसन्तु कासप्रतिश्यायविबन्धगुल्मान्
हिक्कां सरक्तस्तु बलाशपित्तं निहन्ति मेदश्च कुलत्थकोऽयम् २८

रूक्षो विशोषी मधुरः प्रदिष्टः स्नायुं करोत्यस्थिगतं बलिष्टम्
शूलविबन्धभ्रमशोफकर्त्ता दाहार्शहृद्रोगविकारकारी २९

किञ्चित्कषाया मधुराः प्रदिष्टा रक्तप्रशन्तिं जनयन्ति बल्याः
किञ्चित्सवातं विनिघ्नन्ति पित्तं कलायका मुद्गसमानरूपाः ३०

रूक्षो विशोषी मधुरः प्रदिष्टः शूलार्त्तिगुल्मग्रहणीविकारान्
करोति वातामयवर्द्धनञ्च पित्तासृजं ग्राहहरो मसूरः ३१

इति प्रतिष्टो बहुधान्यवर्गो ग्रन्थस्य विस्तारभयाच्च किञ्चित्
ये ये प्रसिद्धाः सुतरां हि लोके तेषां गुणाः श्रेष्ठतमाः प्रदिष्टाः
इति आत्रेयभाषिते हारीतोत्तरे प्रथमस्थाने धान्यवर्गो नाम पञ्चदशोऽध्यायः

१५

षोडशोऽध्यायः

शाकश्चतुर्विधं प्रोक्तं पत्रं पुष्पं फलं तथा
कन्दश्चापि समुद्दिष्टं वक्ष्याम्येतत्पृथक्पृथक् १

द्विविधं शाकमुद्दिष्टं गुरु विद्यात्तथोत्तरम्
प्रायः सर्वाणि शाकानि विष्टम्भीनि गुरूणि च २

रूक्षाणि बहुवर्चांसि सृष्टविरामारुतानि
चक्षुष्या सर्वरोगघ्नी जीवन्ती मधुरा हिमा ३

स्वादुपाकमसृक्पित्तविषघ्नं तण्डुलीयकम्
विविधवातविड्हन्ता मूत्रवातकफे हितः ४

मधुरः कफवातघ्नः पाचनः कराठशोधनः
विशेषतः पित्तहर इत्युक्तः कासमर्दकः ५

जयन्तीवातकफकृत्पित्तसंशमनी तथा
त्रिदोषशमनी वृष्या काकमाची रसायनी ६

वास्तुकं मधुरं हृद्यं वातपित्तार्शसां हितम्
तद्वच्चिल्ली तु विज्ञेया वातपित्तविकारिणाम् ७

केतकी वातला वृष्या तन्द्रानिद्राकरीमता
मेथिका वातशमनी वेजिका वातला मता ८

सर्षपञ्च त्रिदोषघ्नं रुचिदञ्चाग्निवर्द्धनम्
शतपुष्पा त्रिदोषघ्नी मेध्या पथ्या रुचिप्रदा ९

जरात्री सिंहिका प्रोक्ता सातीसारे प्रशस्यते
कुसुम्भं रुचिकृद्वातं हन्ति बल्यं रुचिप्रदम् १०

किञ्चिद्वातावहं स्वादु विपाके च कफापहम्
किञ्चिच्चाम्लं भवेत्क्षारं प्रशस्तमग्निमान्द्यके ११

मेदनं रूक्षमधुरं कषायमतिवातलम्
उष्णा कषायमधुरा चाङ्गेरीवह्निदीपनी १२

कफादनी तथा फञ्जी तिलपर्णी तु सिंहिका
चक्रमर्दन इत्यन्ये दुर्जरा वातकोपनाः १३

पिराडालुको बला भिराडी चिञ्चुकान्या बलादनी
एते श्लेष्मकराः शाका वातलाग्निप्रशान्तकाः १४

सर्वे शाका दृष्टिहरा वीर्यत्वात्तराडुलीयकम्

तथैव शतपुष्पञ्च जयन्ती कासमर्दकम् १५

आलूषकञ्च वेताग्रं गुडूची चापमर्दकम्
किराततिक्तसहितास्तिलाः पित्तहरा मताः १६

कूष्माण्डकालिङ्गचिर्भटं पटोलञ्च पुष्पञ्च तथा च तुण्डी
बीजन्तु कर्कोटककारवेल्लं कोशातकीवेल्लिफलानि चैव १७

कूष्माण्डं त्रिविधं ज्ञेयं बाल्यं मध्यं तथोत्तमम्
वातघ्नं रोचकं बाल्यं मध्यमं स्यास्त्रिदोषहृत् १८

शोफं वातकफौ हन्ति रक्तपित्तनिबर्हणम् १९

कलिङ्गं कफकृद्वातकरणं पित्तनाशनम् २०

कारवेल्लश्च वातघ्नः कफघ्नः पित्तकारकः
उष्णो रुचिकरः प्रोक्तो रक्तदोषकरो नृणाम् २१

पुष्पञ्च चिर्भटश्चैव दोषत्रयकरं स्मृतम्
अपक्वं जीर्णकफकृत्पक्वं किञ्चिद्विशिष्यते २२

तुण्डीरमग्निरुचिकृद्वातपित्तनिवारणम्
कर्कोटकं त्रिदोषघ्नं रुचिकृन्मधुरं तथा २३

कोशातकीफलं स्वादु मधुरं वातपित्तनुत्
विपाके च कफं हन्ति ज्वरे शस्तं प्रदिश्यते २४

पटोलपत्रं विनिहन्ति पित्तं नालं कफघ्नं प्रवदन्ति धीराः
फलञ्च तस्यास्तु त्रिदोषशान्तिं करोति नूनं ज्वरिणो हितं स्यात् २५

निद्राकरं प्रीतिकरं गुरु स्यात्सवातलं कासविकारकारि
श्रेष्ठंसुदीर्घं कफवर्धनञ्च सश्वासकासारुचिवर्धनञ्च २६

तथा बृहत्याः फलमेव शस्तं सन्दीपनं स्यात्कफवातनाशनम्
कगडूविसर्पज्वरकामलानां तथारुचौ शस्तमिदं वदन्ति २७

कन्दशाकान्प्रवद्त्यामि शृगु पुत्र पृथक्पृथक्
सूरगः पिगडपिगडालू पलागडुर्गृञ्जनस्तथा २८

ताम्बूलपर्गः कन्दः स्याद्धस्तिकन्दस्तथापरः
वराहकन्दश्चाप्यन्यः कन्दशाका इमे स्मृताः २९

दीपनः सुरगो रुच्यः कफघ्नो विशदो लघुः
विशेषात्सर्वपथ्यः स्यात्प्लीहगुल्मविनाशनः ३०

ग्राम्लिकायाः स्मृतः कन्दो ग्रहगयर्शोहितो लघुः ३१

पिगडको वातलः श्लेष्मी ग्राही वृष्यो महागुरुः
पिगडालुकः श्लेष्मकरः शुक्रवृद्धिकरो मृदुः ३२

पलागडुर्वातकफहा शुक्रलः शूलगुल्मनुत्
ताम्बूलपर्गः कन्दः स्याच्छुक्रलो विशदो लघुः ३३

हस्तिकन्दो गुरुर्ग्राही शुक्रवृद्धिप्रदो मतः
वराहकन्दश्चार्शोघ्नो वातगुल्मनिवारगः ३४

ग्रन्ये तेऽज्ञातकन्दाश्च ते न प्रोक्ता मयाऽनघ
सर्वेषां कन्दशाकानां सूरगः श्रेष्ठ उच्यते ३५

दीपनोऽर्शस्तथा गुल्मक्रिमिप्लीहविनाशनः
दद्रूगां रक्तपित्तानां कुष्ठानां न प्रशस्यते ३६

एते कन्दाः समाख्याताः श्रीमन्तो हि भिषग्वर ३७
इति ग्रात्रेयभाषिते हारीतोत्तरे प्रथमस्थाने शाकवर्गो नाम षोडशोऽध्यायः १६

सप्तदशोऽध्यायः

आम्रं जम्बूश्च कोलश्च दाडिमामलकं तथा
खर्जूरश्च परूषश्च मातुलुङ्गपियालजम्  १

नागरं वालिम्का चैव द्राक्षा च करमर्दकम्
क्षीरिका मधुराश्चैव फलवर्गे प्रकीर्तिताः  २

अपक्वमाम्रं फलमेव शस्तं संग्राहि पित्तासृजि कोपनञ्च
तथा विपक्वं मधुरञ्च चाम्लं भेद्यं सपित्तामयनाशनञ्च  ३

जम्बूर्ग्राही मधुरकफहा रोचनो वातहारी कोलञ्चाम्लं मधुरमथवा श्लेष्मलं ग्राहि शस्तम्  ।
श्रेष्ठं वातादिकरुजहरं दाडिमञ्चामयघ्नं तत्प्रोक्तञ्च मधुरमुदितं स्वादु राजादनञ्च
४

परूषककरहपीलुकानां पियालसिंहीकरमर्दकानाम्
फलानि मेहे विनिहन्ति पित्तं हन्याच्च सर्वातुरसन्धिवातम्  ५

स्यान्मातुलुङ्गः कफवातहन्ता हन्ता क्रिमीणां जठरामयघ्नः  ।
सन्दूषितरक्तविकारपित्तसन्दीपनः शूलविकारहारी  ६

श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोफनम्  ।
दीपनं लघु रुच्यञ्च मातुलुङ्गमुदाहृतम्  ७

त्वक् तिक्ता दुर्जरा तिष्या क्रिमिवात कफापहा  ।
स्वादु शीतं गुरु स्निग्धं करहं वातपित्तजित्  ८

मध्यं श्लेष्मातकं छर्दिकफारोचकनाशम्  ।
दीपनं लघु संग्राहि गुल्मार्शोघ्नन्तु केशरम्  ९

पित्तमारुतहृद्वातपित्तलं बद्धकेशरम्

हृद्यं वर्णकरं रुच्यं रक्तमांसबलप्रदम्  १०

शूलाजीर्णविरुद्धेषु मन्दाग्नौ कफमारुते
अरुचौ श्वासकासे च स्वरसोऽस्योपदिश्यते  ११

रसोऽतिमधुरो हृद्यो वीर्यं पित्तानिलापहम्
कफकृद्दुर्जरः पाके मातुलुङ्गकटाहकः  १२

चेतोहारी तेन पृथगतिकटुत्वञ्चाभिधत्ते
हृद्रोगानाहगुल्मश्वसनकफकरो ग्रीष्म कालेऽपहन्ता  १३

वीर्यकृच्चार्शहृत्काले स्यात्तथा क्रिमिहृन्मतम्
तिक्तं पुष्पञ्च बीजञ्च गुल्मनुत्स्यात्तथापरम्  १४

निम्बूकं क्रिमिसमूहनाशनं तीक्ष्णमुष्णमुदरग्रहापहम्
वातपित्तकफशूलिनां हितं नष्टधान्यरुचिशोधनं परम्  १५

त्रिदोषसद्योज्वरपीडितानां दोषाश्रितानाञ्च स्रवज्जलानाम्
मलग्रहे बद्धगुदे हितञ्च विषूचिकायां मुनयो वदन्ति  १६

नारङ्गजं स्वादु गुणोपपन्नं सन्दीपनं रोचकमर्शसाञ्च
त्रिदोषहृच्छूलक्रिमीन्निहन्ति मन्दाग्निकासश्वसनापहारि  १७

अम्ली हि चाम्लफलमविपक्वां तदस्रपित्तामकरं विदाहि
वातामये शूलगदे प्रशस्तं पक्वं तथा शीतगुणोपपन्नम्  १८

द्राक्षाफलं मधुरमम्लकषाययुक्तं क्षारेण पित्तमरुतां कफहारिशीघ्रम्  ।
श्रेष्ठं निहन्ति रुधिरामयदाहशोषमूर्च्छाज्वरश्वसनकासविनाशकारि  १९

कषायघ्ना विपाके च द्राक्षा चैव कफे हिता  २०

नालिकेरं सुमधुरं गुरु स्निग्धञ्च शीतलम्

हृद्यं सबृंहणं बस्तिशोधनं रक्तपित्तनुत् २१

विष्टम्भि पक्वं मतिमन्नपक्वं कफातलम्
बृंहणं शीतलं वृष्यं नालिकेरफलं विदुः २२

हृद्यं मनोज्ञं कफवृद्धिकारि शान्तञ्च सन्तर्पणमेव बल्यम् ।
रक्तं सपित्तं श्वसनञ्च दाहं रम्भाफलं हन्ति सदा नराणाम् २३

अपक्वं संग्राहि च शीतलञ्च कषायकं वातकफं करोति ।
विष्टम्भि बल्यं गुरु दुर्जरञ्च आरण्यरम्भाफलमेव तद्वत् २४

कपित्थकाम्लं मधुरं कषायं विषदं गुरु
कासातिसारहृद्रोगच्छर्दिकफामयापहम् २५

कपित्थं मधुरं शीतं कषायं ग्राहकं लघु २६

अपक्वं खर्जूरफलं त्रिदोषशमनं मतम्
पक्वमेव हितं श्रेष्ठं त्रिदोषशमनं परम् २७

कषायमधुरं भेदि पूगं पित्तकफापहम् २८

नागवल्लोदलं हृद्यं सुगन्धि कफवातजित् २९

खदिरः कफपित्तघ्नः कण्ठ्यः कुष्ठनिबर्हणः ३०

चूर्णकं पित्तहृत्तीक्ष्णं ताम्बूलं कफवातजित् ३१

संयोगात्सुरसं स्वादु मुखवैरस्यनाशनम्
दन्तस्थैर्यकरं शोषपीनसारोगशान्तिकृत् ३२

रोगपाटवसंशुद्धिस्वरकान्तिकरं मतम्
कण्ठ्यं रुच्यमुरस्यञ्च फलकर्पूरसंयुतम् ३३

इति आत्रेयभाषिते हारीतोत्तरे प्रथमस्थाने फलवर्गो नाम सप्तदशोऽध्यायः१७

अष्टादशोऽध्यायः

अतो वक्ष्यामि माक्षीकं त्रिविधं शृणु पुत्रक
भ्रामरं सारघं क्षौद्रं तेषां वच्मि गुणागुणम्  १

शीतं कषायं मधुरं लघु स्यात्सन्दीपनं लेहनमेव शस्तम्
संशोधनञ्च व्रणशोधनञ्च संरोपणं हृद्यतमञ्च बल्यम्  २

त्रिदोषनाशं कुरुते च पुष्टिं कासक्षये वा क्षतजे च छर्दौ ।
हिक्काभ्रमे शोषणपीनसानां रक्तप्रमेहे सरलातिसारे  ३

रक्तातिसारे च सपित्तरक्ते तृण्मोहहृत्पार्श्वगदेऽपि शस्तः ।
नेत्रामये वा ग्रहणी गदे वा विषे प्रशस्तं भ्रमरैश्चित्तं यत्  ४

भ्रामरं सघनं जाढ्यं भूयिष्ठं मधुरं च यत्
क्षौद्रं विशेषतो ज्ञेयं शीतलं लघु लेहनम्  ५

तस्माल्लघुतरं रूक्षं सारघं नातिशीतलम्
कासे क्षये प्रशस्तं स्यात्कामलार्शो विनाशनम्  ६

नातिशीतं न च रूक्षं दीपनं बलकृन्मतम्
अतीसारे नेत्ररोगे क्षते वा क्षतजे हितम्  ७

भ्रामरं वृक्षसंस्थाने विटपे सारघं भवेत्
रन्ध्रे तु कोटरे वापि क्षौद्रं तत्र प्रशस्यते  ८

इति आत्रेयभाषिते हारीतोत्तरे मधुवर्गो नाम अष्टादशोऽध्यायः  १८

एकोनविंशोऽध्यायः

गौडी माध्वी तथा पैष्टी निर्यासा कथितापरा
इति चतुर्विधा ज्ञेयाः सुरास्तासां प्रभेदकाः  १

भेदेन द्वादश प्रोक्ताः सुराः सौवीरकारसैः
सीधुर्गौडी च मत्स्यराडी गुडेन प्रभवास्त्रयः २

माध्वीकं मधुकं माध्वं मधुना संयुताः सुराः
पैष्टीष्वरिष्टजातन्तु तराडुलप्रभवास्त्रयः ३

मृद्वीकारसमम्भूता ताडमाडरसोद्भवा
निर्यासा सा तु विज्ञेया तासां वच्मि गुणागुणम् ४

सीधुः कषायाम्लकमधुरो वा सन्दीपनो भेदमलापमर्दः ।
आमातिसारानिलपित्तशूलश्लेष्मामयार्शोग्रहणीगदघ्नः ५

गौडी कषाया मधुराम्लशीता सन्दीपनी शूलमलापहन्त्री
हृद्यात्रिदोषं शमयत्यजीर्णं पाराडामथार्शःश्वसनं निहन्ति ६

हरति मलमियञ्च दीपनी पाराडुमेहान् लघुमधुरसुशीता रोचना पित्तहन्त्री ।
जरयति सकलं वा पीतमम्लातिमात्रं श्वसनरुधिरकासान् हन्ति वा
कामलाञ्च ७

माध्वीकं शीतलं चाम्लमधुरमपि तथा सत् कषायोष्णकञ्च हन्यात्पित्ताम-
यार्शः श्वसनमपि तथा चातिसारं प्रमेहान् ।
शूलानाहोपमर्दं जरयति सकलं दीपयत्यग्निसात्म्यं तस्माद्वातामवातं वमन-
मपि तथा हन्ति सर्वांश्च रोगान् ८

कषाया मधुरा चाम्ला सुरा सन्दीपनी मता
कासार्शोग्रहणीस्तन्यमूत्ररोगविनाशिनी ९

पैष्टी सन्दीपनी रुच्या कफकृद्वातनाशिनी
पित्तला पाराडुरोगाणां कारिणी बहुधा मता १०

वातपित्तकरो रूक्षः कषायो विशदो गुरुः

श्लेष्मलो भेदनो ग्राही मूत्रकृच्छ्रशिरोऽर्त्तिनुत्  ११

श्लेष्मदोषकरा वृष्या वातला श्लेष्मवर्द्धिनी
कासहृल्लासविध्वंसकरणा ताडमण्डिका  १२

पूर्णं कषायपित्ते च योगयुक्ता सुरा हिता
बहुदोषहरा चैव श्लेष्मरोगे विशेषतः  १३

श्रमज्वरातुरे शोषे शोफपाण्ड्वामये क्षये
क्षतेः क्लमेऽपस्मारे च यक्ष्मिणाञ्च भ्रमेषु च  १४

श्रान्ते वा विषपीते वा सर्पदष्टे जलोदरे
रक्तपित्ते तथा श्वासे वारुणी न हिता मता  १५

इति आत्रेयभाषिते हारीतोत्तरे मद्यवर्गो नामैकोनविंशोऽध्यायः  १९

विंशोऽध्यायः

शूलिनः शृङ्गिणश्चैव नखिनोऽन्ये प्रकीर्तिताः
श्वापदाः पक्षिणश्चान्ये मत्स्याश्चान्याः सरीसृपाः  १

जलेचरा जलाधारा ग्रामारण्यनिवासिनः
अनूपा जाङ्गला जीवास्तथा साधारणोऽपरः  २

मृगरुरुचित्राङ्गास्तथा गण्डश्च वनगवयमहिषाः ।
सूकराद्याश्च येऽपि भवन्ति विविधवर्णा ग्रामवासिनश्च  ३

ये ये वनगजाद्याश्च ग्रामकाद्याश्च शृङ्गिणः
शूकरच्छिक्कराद्याश्च शूरिणो वा भवन्त्यमो  ४

शशकः शल्लकी गोधा मार्जाराद्या नखायुधाः
सर्पमत्स्यादिका ये च ते विज्ञेयाः सरीसृपाः  ५

मत्स्यमंकुरकाद्या ये कच्छपा दुर्जरादयः
हंससारसचक्राद्याः कपिञ्जलकुमूदकाः ६

ग्रानूपास्तेषु विज्ञेयाः श्लेष्मला वातकोपनाः ७

शशलावकवाताटा गोधाहरिणकूटकाः
छिक्कराद्यास्तथान्येऽपि तित्तिराद्याश्च कूर्चकाः ८

भारद्वाजास्तथा श्येना मूषका वरवारणाः
इत्येता जाङ्गला जीवा ये जलेन विना स्थिताः ९

शूकरा मृगशल्लाद्याः सलिलाशयमाश्रिताः
मकराद्याश्च गराडाका गवयाश्च तथापराः १०

महिषाद्याश्च ये चैव ते च साधाराणा मताः
कुररबकमकराः कङ्कचटकपिकभृङ्गसारसाः ११

ग्राडिदात्यूहहंसा जलकरटिकपिङ्कटिट्टिभाद्याश्च
जलेचरा विहङ्गास्ते खञ्जरीटाश्च भासकाः १२

इत्येते जलजा जीवाः स्थलजाः स्थलचारिणः १३

गजवाजिनस्तथोष्ट्रा माहिषा सौरभाजकाः
खरशूकरमेषाश्च श्वानो मार्जारमूषकाः १४

इत्येते पशवो ज्ञेया ग्रामवासनिवासिनः
कुक्कुटकलविङ्कपारावतकपोतकाः १५

पच्चिणो ग्रामचाराश्च वच्मि चैषां गुणागुणम् १६

शृङ्गिणां हरिणः श्रेष्ठो बल्यो रोचनदीपनः
त्रिदोषघ्नो लघुः पाके मधुरो ज्वरिणां हितः १७

क्षते क्षयार्शसोः पाण्ड्वरोचकनिपीडिते
कासश्वासातुराणाञ्च एणमांसं सुखावहम् १८

चित्राङ्गो वातशमनो बृंहणो बलकृन्मतः
श्लेष्मलः कथितो वापि दुर्जरो मेदवर्द्धनः १९

छिक्करो लघु बृंही च मधुरो दोषनाशनः
तुल्यो हरिणमांसस्य ज्वरेष्वपि प्रशस्यते २०

रोहितो बृंहणश्चैव विबन्धी दुर्जरो घनः
ज्वरिणां विषमाग्नीनामतीसारेण त्रास्यते २१

तथैव गण्डगवयमहिषोष्ट्रतुरङ्गमाः
विबन्धिगुरवः स्निग्धा वातालस्ये प्रकीर्त्तिताः २२

वातघ्नं रोचनं वृष्यं दुर्जरं श्रमनाशनम्
सौकरं पित्तशमनं रुचिदं धातुवर्द्धनम् २३

शशको जाङ्गलश्रेष्ठो लघुर्वृष्यश्च दीपनः
रुचिकृत्तर्पणो बल्यस्त्रिदोषशमनो मतः २४

ज्वरे च पाण्डुरोगे च क्षये कासे गुदामये
राजयक्ष्मणि पाण्डौ च तथातीसारिणां हितः २५

शल्लकी बृंहणो बल्यः स्निग्धो वृष्यो रुचिप्रदः
वातश्लेष्महरो हृद्यो मधुरो धातुवर्द्धनः २६

शल्यको बृंहणो बल्यः स्निग्धो वृष्यो रुचिप्रदः
वातलः किञ्चिद्धातूनां वर्द्धनो मधुरो घनः २७

रक्तपित्तहरा वृष्या स्निग्धा मधुरशीतला

श्वासकाशहरा प्रोक्ता गोधा चार्शोहिता बला २८

स्निग्धो बलकरः शुक्रवर्द्धनो मधुरो लघु
दुर्नामकृमिदोषघ्नो वातहारी च मूषकः २९
इति आत्रेयभाषिते हारीतोत्तरे चतुष्पदानां मांसवर्गो नाम विंशोऽध्यायः २०

## एकविंशोऽध्यायः

पक्षिणाञ्च महाश्रेष्ठो लावको जाङ्गलात्मजः
संग्राही दीपनः प्रोक्तः कषायो मधुरो लघुः १

तथा विपाके मधुरः सन्निपातेऽतिपूजितः २

तथैव तित्तिरो वृष्यो मेधाग्निबलवर्द्धनः
सर्वदोषहरो बल्यो बलाका समता गुणैः ३

वार्त्ताको विशदो वृष्यो यथा लावस्तथैव च
कृष्णगौरप्रभेदाश्च श्रेष्ठो गौरश्च तित्तिरः ४

तृतीयतित्तिरोऽन्योऽपि सामान्यो गुणलक्षणैः
सवातलोऽतिबलकृद्धनः किञ्चिद्रसायनः ५

मेधावृद्धिं स्रोतसाञ्च करोत्युत्पाटनं शिखी
सवातलोऽतिबलकृद्धनः किञ्चिद्रसायनः ६

सुस्निग्धो श्लेष्मलो वृष्यो घनः शुक्रविवर्द्धनः
मांसवृद्धिकरो बल्यो द्वितीयश्च मयूरकः ७

तथैव कौक्कुटो ज्ञेयो मधुरश्च गुणात्मकः ८

कापोतो बृंहणो बल्यो वातपित्तविनाशनः
तर्पणः शुक्रजननो हितो नृणां रुचिप्रदः ९

तथा पारावतो ज्ञेयो वातश्लेष्मकरो गुरुः
बल्यो वृष्यो रुचिकृच्च तथा हारीतको मतः १०

पोतकी भङ्गिका क्षुद्रा तथा च कुनटी तथा
एते तुल्यगुणा ज्ञेया लघुवातापहारिणः ११

लघुश्च कृकरो ज्ञेयः कायाग्निवर्द्धनो भृशम् १२

तथा लघुर्वातहरः काष्ठकूटोऽग्निवर्द्धनः
वातश्लेष्माधिको ज्ञेयः शीतलः शुक्रवर्द्धनः १३

अश्मरीं हन्ति विशदो बलकृन्मां सतक्षणः १४

चकोरोऽथ तथा शारी समदोषौ गुणागुणैः १५

क्रौंचो वृष्योऽतिरुचिकृदश्मरीं हन्ति नित्यशः
शोषमूर्च्छाहरो वृष्यो हन्ति कासमरोचकम् १६

कोकिलः श्लेष्मलो ज्ञेयः पित्तसंशमनो मतः १७

वैवृताक्षस्त्रिदोषघ्नो बल्यः शुक्रविवर्द्धनः १८

गृहस्य चटको वृष्यो बलशुक्रविवर्द्धनः
सर्वदोषहरश्चापि दीपनो मांसवर्द्धनः १९
इति आत्रेयभाषिते हारीतोत्तरे स्थलचराणां मांसवर्गो नाम एकविंशोऽध्यायः
२१

द्वाविंशोऽध्यायः

हंसः श्लेष्मकरो बलातिरुचिदो वृष्यो गुरुः शीतलस्
तद्वच्च कण्डजाड्यशुक्रजननो वृष्योऽतिरुच्यो मृदुः ।
ज्ञेयः सारसकः कफानिलहरो वृष्यो गुरुश्चोच्यते

वृष्यो वीर्यविवर्द्धनः कफहरः कङ्कस्तथा भासकः १

आडी वातविकारकासहननी बल्या वृषा दीपनी
क्रौञ्ची चासुरिशुक्रदोषहननी तुल्यस्तथा कर्कटः ।
दात्यूहो मरुतस्य नाशनकरो वृष्योबलः शुक्रदस्
तथा श्रेष्ठगुणः श्रमोपशमनः शुक्रप्रदो वातहा २

मत्स्यानां मकरः श्रेष्ठो दीपनो वातनाशनः
रुचिप्रदः शुक्रकरश्चाश्मरीदोषनाशनः ३

शृङ्गी वातविनाशनो रुचिकरो वृष्यः कफघ्नो मतस्
तस्माद्रोहितको हितो बलकरो वातात्मकः श्लेष्मकः ४

श्लेष्माकरी तु सफरी नलमीनः कफात्मकः
शकुली च विशाला च ज्ञेयौ वातकफात्मकौ
बिलं विमत्स्यं ज्ञेयञ्च वातपित्तकफाकरम् ५

कच्छपो मधुरः स्वादुः शुक्रवृद्धिकरो मतः
वातश्लेष्मप्रजननो बृंहणो रूक्ष एव च ६

कुलीरोऽतिबलो वृष्यः पाण्डुक्षयविनाशनः
शोफातिसार ग्रहणीस्थविराणां स्त्रियां हितः ७

मकरो दीपनो हृद्यो ग्राही चोष्णविकारहा
मूत्राश्मरीणां शमनो गुल्मातीसारनाशनः ८

बककाकारिश्येतशूकरखरोष्ट्राश्वादयो भल्लूका व्यालाः सौरभेयप्रभृतयश्च ये चान्ये जीवा नृणाम् ।
मण्डूकाश्च सरीसृपादिकगणाधूकाः कलिङ्गाश्च ये काकसारसशारिकाः
शुका इमे भक्ष्या न शस्ता इमे ९

गृहचटकचकोराः काकजात्याश्च श्येनाः पिकशुकमघशारीभृङ्गदात्यूहमाङ्गाः ।
जलकरटकपोतपोटकीखञ्जरीटाः कुकुरमघमलिङ्गा यूकपिङ्गादयश्च १०

एते भक्ष्या नैव भक्ष्या न चेष्टा ये चान्येऽप्यज्ञातनामाण्डजाश्च ।
अन्ये चापि श्वापदा ये च निन्द्यास्ते च खाद्ये वर्जिताश्चात्र सर्वे ११

इति आत्रेयभाषिते हारीतोत्तरे मांसवर्गो नाम द्वाविंशोऽध्यायः २२

## त्रयोविंशोऽध्यायः

मण्डः परिस्रवो भक्तस्तर्पणो वातनाशनः
मूत्रमेहसमीरघ्नो रुचिकृन्मूत्रलो मतः १

आशुमण्डो भवेद्ग्राही मधुरो वा कफात्मकः
तर्पणः क्षयदोषघ्नः शुक्रवृद्धिकरः परः २

अप्रसाधितभक्तो युगन्धराणां भक्तश्च घनो विशदमधुरश्च
कफे त्रिदोषशमनश्च कथ्यते कासश्च श्वासात्मक एव स स्मृतः ३

सन्दीपनी स्वेदकरा यवागूः सम्पाचनी दोषमलामयानाम्
सन्तर्पणी धातुबलेन्द्रियाणां शस्ता भवेत्स्याज्ज्वररोगिणाञ्च ४

भागैकञ्च भवेत् तत्र द्विभागेन जलं क्षिपेत्
चित्रकं पिप्पलीमूलं पिप्पली चव्यनागरम् ५

धान्यकस्य समांशानि पिष्ट्वा श्वेतासितण्डुलान्
संशुद्धा शिथिला किञ्चित् सा यवागूर्निगद्यते ६

यवागूमुपभुञ्जानो जनो नारुचिमाचरेत्
शाकमाषफलैर्युक्ता यवागूः स्याच्च दुर्जरा ७

पञ्चकोलकधान्याकैर्युक्तो रास्नान्वितः पुनः

मण्डस्त्रिदोषशमनो ज्वराणां पाचनः परः  ८

पायसं गुरु विष्टम्भजननं श्लेष्मवातलम्
पित्तसंशमनं बल्यं वृष्यं श्रेष्ठं रसायनम्  ९

गुरुर्विष्टम्भजननो वातश्लेष्मकरः स्मृतः
पित्तसंशमनो बल्यो बृष्यश्चैव फलप्रदः  १०

मुहुस्तण्डुलसंयुक्तो माषतण्डुलवान् पुनः
अन्यथा धान्यगुणवान् लक्ष्यते च भिषग्वर  ११

तिलानां संयुतो हृद्यो धातुपुष्टिविवर्द्धनः
गुरुर्विष्टम्भमलकृद्दुर्जरः श्लेष्मकोपनः  १२

सूपश्चोक्तस्त्रिदोषघ्नो व्यञ्जितश्चैव सर्पिषा
धातुपुष्टिकरः श्रेष्ठो बृंहणो बलवर्द्धनः  १३

वातकफकरो हृद्यः खलको बलकारकः  १४

कफानिलहरो हृद्यो दीपनो दाडिमाम्लकः  १५

पर्पटस्तैलसंभृष्टो दोषाणाञ्च ज्वरापहः
रुचिकृद्बलकृच्चैव दाहशोषतृषापहः  १६

सण्डाकी च गुरुःस्निग्धा दुर्जरा अतिशीतला
पित्तश्लेष्मकरा बल्या धातूनाञ्च बलप्रदा  १७

दुर्जरा मधुरा रुच्या वटिका माषकादिभिः  १८

गुडदधिप्रमुदिता हिता शिखरिणी नृणाम्
धातुवृद्धिकरा वृष्या वातपित्तविनाशिनी  १९

शीतलः पित्तशमनो भ्रममूर्च्छातृषापहः
खराडेन संयुतः श्रेष्ठो घृतयुक्तो जलाधिकः २०

सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः
नातिद्रवा नातिसान्द्रा मन्थ इत्यभिधीयते २१

मन्थः सद्यो बलच्छर्दिपिपासादाहनाशनः
साम्लः स्नेहश्च सगुडो मूत्रकृच्छ्रस्य साधनः २२

सिद्धं मांसं वेसवारेण युक्तं बल्यं श्रेष्ठं स्वादु संदीपनञ्च
त्रिदोषशमनं गुरु लवणस्नेहयुक्तं दुर्जरं दीपनं स्मृतम् २३

नहि मांससमं किञ्चिदन्यद्देहमहत्त्वकृत्
मांसादमांसं मांसेन सम्भृतत्वाद्विशिष्यते २४

अङ्गारैः परिपक्वञ्च दीपनं श्लेष्मनाशनम्
बल्यञ्च स्नेहसंयुक्तं घनं घनगुणात्मकम् २५

अत्युष्णं मराडकं पथ्यं लघु चैव यथोत्तरम्
त्रिकशूलपार्श्वशूलपरिणामापहं तथा
तृष्णामारुतछर्दिघ्नमामाशयकरं तथा २६

तप्तकर्परपक्वा या रोचनी मधुरा घना
कफवृद्धिकरी बल्या पित्तरक्तप्रदायिनी २७

पूरिका घृतपूरन्तु त्रिदोषशमनं परम्
वृष्यं संबृहणं स्वादु ज्ञतज्ञयनिवारणम् २८

गुरूष्णो दुर्जरो ज्ञेयो वातश्लेष्मकरो गुरुः
पूपकः श्लेष्मको हृद्यो वृष्यो वातानुलोमकः २९

सोमालिका घना स्वादू रोचनी बलवर्द्धनी
दुर्जरा दोषशमनी वृष्यानुकरणी मता ३०

बृंहणी वातपित्तघ्नी पथ्या लघुतरा मता
फेनिका रोचनी बल्या सर्वधातुबलप्रदा ३१

विष्टम्भी मधुरो हृद्यो घनो वातकफात्मकः
स तिक्तो वा त्रिदोषघ्नो दुर्जरो जायते पुनः ३२

अभिन्नो दुर्जरो बल्यो घनतृष्णाप्रदः स्मृतः
तीक्ष्णो विपाके विष्टम्भी दुर्जरो जायते पुनः ३३

कटुकास्तर्पणा बल्या दुर्जराः शोषकारकाः
मन्दाग्नौ न प्रशस्यन्ते मोदका बहुवर्णकाः
द्रव्यं गुणविशेषेण सारस्वादेन वा पुनः ३४

पोलिका कथिता बल्या कफदोषकरी मता
वृष्या वीर्यप्रदा ज्ञेया दोषला वीर्यवर्द्धिनी ३५

विदलान्नस्य या पर्णा सिद्धा कर्परकेण तु
रुच्या वान्नविशेषेण दोषान् सर्वान् विभावयेत् ३६

अन्यानि चान्नपानानि नैवोक्तानि महामते
ग्रन्थविस्तारभीरुश्च लोको वक्तुं न च क्षमः ३७

श्रमात्तु भोजनं यस्तु पानं वा कुरुते नरः
ज्वरः सञ्जायते तस्य छर्दिर्वा तत्क्षणाद्भवेत् ३८

कृत्वा तु भोजनं सद्यो व्यायामं सुरतं तथा
यः करोति विपत्तिः स्यात्तस्य गात्रस्य निश्चितम् ३९

न चातिशीतं भुञ्जीत नात्युष्णं भोजने हितम्
कुर्याद्वातकफौ शीतमुष्णं भवति सारकम्  ४०

न श्रान्तो भोजनं कुर्यान्न व्यायामसमाकुलः
विषमासने न भोक्तव्यं करोति विविधान् गदान्  ४१

आदौ फलानि भुञ्जीत वर्जयित्वा तु कर्कटीम्
न नक्तं दधि भुञ्जीत भोजनार्द्धे न धावनम्  ४२

भोक्तोपविशति स्थौल्यं बलमुत्तानशायिनः
आयुर्वामकटिस्थस्य मृत्युर्धावति धावतः  ४३

नवादौ सलिलं पेयं भोजने पानमाचरेत्
अर्द्धाहारेण भुञ्जीत तृतीयं व्यञ्जनेन तु  ४४

चतुर्थं तोयपानेन पूर्णाहारः सुजायते  ४५

भोजनोर्ध्वं चंक्रमते शतपादं शनैः शनैः
पश्चादुत्तानशयनं ततो वामे क्षणं स्वपेत्  ४६

भुक्त्वोपरि समाचम्य मार्जयेद्दक्षिणाकरैः
पुनर्दक्षिणहस्तेन मार्जयेदुदरं सुधीः  ४७

उद्गीरयेत्समुद्धारं न चोद्धारस्य धारणा  ४८

व्यायामञ्च व्यवायञ्च धावनं पानमेव च
युद्धं गीतञ्च पाठञ्च क्षणभुक्तो विवर्जयेत्  ४९

न सद्यः पीते पठनं गमनं च न कारयेत्
न वा वाहनमारोहं विवादं न च कारयेत्  ५०

दिवास्वापं न कुर्यात्तु भुक्त्वोपरि च विश्रमेत्

अकालशयनाच्छ्लेष्मा प्रतिश्यायः प्रपीनसः ५१

क्षयशोफशिरोऽर्त्तिश्च जायते चाग्निमदन्ता ५२

मद्यपीते परिश्रान्ते हिक्काश्वासातुरेषु च
भयशोकक्षुधार्त्तानां पठनान्मैथुनेन च ५३

तथैव वृद्धबाले च भाराक्रान्ते तथातुरे
अतीसारे च शोफे च तृष्णापानात्ययेऽपि च ५४

ग्रीष्मे बाल्ये निशादृप्ते दिवास्वप्नं हितं भवेत् ५५

इति आत्रेयभाषिते हारीतोत्तरे अन्नपानवर्गो नाम त्रयोविंशोऽध्यायः २३

प्रथमस्थानं समाप्तम् १

# अथ द्वितीयस्थानम्
## प्रथमोऽध्यायः

आत्रेय उवाच
अथातः सम्प्रवक्ष्यामि द्वितीयस्थानमुत्तमम्
शुभाशुभानि स्वप्नानि स्वास्थ्यारिष्टानि मानुषे १

शृणु पुत्र समासेन यथा वत्स प्रकाश्यते २

हारीत उवाच
ज्ञातं मया महाप्राज्ञ अन्नपानं तथोत्तमम्
इदानीं ज्ञातुमिच्छामि रोगाणां रोगविज्ञताम् ३

कर्मजा व्याधयो ये च तान्वद त्वं महामते ४

आत्रेय उवाच
कर्मजा व्याधयः सर्वे भवन्ति हि शरीरिणाम्
सर्वे नरकरूपाः स्युः साध्यासाध्या भवन्त्यमी ५

अज्ञातं यत्कृतं पापं पश्चात्कृच्छ्रं समाचरेत्
प्रायश्चित्तबलेनापि साध्यरूपी भवेद्गदः ६

क्रियते ज्ञातरूपेण यत्पश्चात्कृच्छ्रमाचरेत्
प्रायश्चित्तेन प्रान्ते तु कष्टसाध्यो भवेद्गदः ७

ब्रह्मघ्नगोघ्न धरणीपतिघातकश्च आरामतोयधरनाशकपारदाराः
स्वाम्यङ्गनागुरुवधूकुलजाभिगामी एते त्रयोदशविधाः प्रबाला गदाश्च ८

पाण्डुः कुष्ठं राजयक्ष्मातिसारो मेहो मूत्रं चाश्मरी मूत्रकृच्छ्रम्
शूलः श्वासः कासशोफव्रणाश्च दोषाश्चैते पापरूपा नृणां स्युः ९

ज्वरोऽजीर्णं तथा छर्दिभ्रममोहाग्निमान्द्यताः

यकृत्प्लीहार्शःशोषाश्च एते चैवोपदूषकाः १०

व्रण शूलं शिरःशूलं रक्तपित्तं तथोद्ध्र्वगम्
एते रोगा महाप्राज्ञ अभिशापाद्भवन्ति हि ११

अन्येऽपि बहुधा रोगा जायन्ते दोषसम्भवाः
अतो वक्ष्ये समासेन शृणु त्वञ्च महामते १२

ब्रह्मघ्नो जायते पाण्डुः कुष्ठी गोवधकारकः
राजघ्नो राजयक्ष्मी स्यादतिसार्योपघातकः १३

स्वाम्यङ्गनाभिगमने मेहा रोगा भवन्ति हि
गुरुजायाप्रसङ्गेन मूत्ररोगोऽश्मरीगदः १४

स्वकुलजाप्रसङ्गाच्च जायते च भगन्दरः
शूली परोपतापी च पैशून्याच्छ्वासकासिनः १५

मार्गे विघ्नकरा ये तु जायन्ते पादरोगिणः
अभिशापाद्व्रणोत्पत्तिर्यकृद्वापि प्रजायते १६

सुरालये जले चापि शकृद्वृष्टिं करोति यः
गुदरोगा भवन्त्यस्य पापरूपातिदारुणाः १७

परतापिद्विजानाञ्च जायन्ते हि महाज्वराः
परान्नविघ्नजननादजीर्णमपि जायते १८

गरदश्छर्दिरोगी स्यात्पादाष्टविभ्रमी तथा
धूर्त्तोऽपस्माररोगी स्यात्कदन्नदेऽग्निमान्द्यकं १९

यकृत्प्लीहो भवेद्रोगो भ्रूणपातकपातकात्
व्रणं शूलं शिरःशूलं परतापोपकारणात् २०

अपेयपानरतको रक्तपित्ती प्रजायते
दावाग्निदायको यस्तु जायते च विसर्पवान्  २१

बहुवृक्षोपच्छेदो च जायते च बहुव्रणः
परद्रव्यापहाराच्च जायते ग्रहणीगदः  २२

कुनखी स्वर्णस्तेयाच्च प्रसूतिस्तस्य जायते
रौप्यस्तेयाच्चित्रकुष्ठं ताम्रचौराद्विपादिका  २३

त्रपुश्चौरः सिध्मलश्च मुखरोगी च सीसहृत्
वर्वरो लोहचौरः स्यात्क्षारचौरोऽतिमूत्रलः  २४

घृतचौरोऽन्त्ररोगी च तैलचौरोःतिकण्डुकः
एतैश्छिद्रैस्तु काणाक्षो वक्रोक्तो वक्रलोचनः  २५

दोषवान्स्याच्छ्यावदन्तो दुष्टवाक्कुष्ठदूषणः
रसनाशाज्जिह्वारोगी गोत्रहा लूतिकाव्रणी  २६

एते चैव महादोषा अतो वक्ष्यामि निष्कृतिम्
कृच्छ्रेण येन सिध्यन्ति पापरूपा इमे गदाः  २७

गोदानं भूमिदानञ्च स्वर्णदानं सुरार्चनम्
कृत्वा पश्चात्प्रतीकारं कुर्यात्पाण्डूपशान्तये  २८

महापापेषु सर्वस्वं तदर्द्धमुपदोषजे
आत्रेयाद्दशषष्ठांशात्कल्प्यं व्याधिबलाबलम्  २९

नवषष्टिकृतं कर्मकुष्ठरोगोपशान्तये
गोहिरण्यप्रदानञ्च तथा मिष्टान्नभोजनम्  ३०

चतुर्विधं दानमिदं दत्त्वा कुर्यात्प्रतिक्रियाम्

कदाचिदपि सिध्येत आयुषश्च बलक्रियाम्  ३१

मेहे सुवर्णदानञ्च शूले श्वासे भगन्दरे
आश्वानडुहदानेन श्वासकासाद्विमुच्यते  ३२

ज्वरे चेश्वरपूजा च रुद्रजाप्यं समाचरेत्
अतिपानान्नदानञ्च शस्त्रदानं भ्रमातुरे  ३३

अग्निहोमं चाग्निमान्द्ये कन्यादानञ्च गुल्मके
मेहाश्मरीविनाशाय लवणञ्च प्रदीयते  ३४

बहुभोजनदानेन शूलरोगाद्विमुच्यते
महाज्वरे शान्तिकञ्च सहस्त्रं गण्डुकं शिवम्  ३५

स्नापयेत्तेन सिद्धिः स्याज्ज्वररोगाद्विमुचयते
घृतमधुप्रदानेन रक्तपित्तं प्रशाम्यति  ३६

वनस्पतिसिञ्चनेन विसर्पात्परिमुच्यते
विटपिसिञ्चनेनाऽथ नात्र याति बहुव्रणः  ३७

चतुर्विधेन दानेन साध्यः स्याद्ग्रहणीगदः
सुवर्णदानात्कुनखी श्यावदन्तः सुखी भवेत्  ३८

रौप्यदानाच्चित्रकुष्ठं साध्यं वापि प्रदिश्यते
सिध्मले त्रपुदानञ्च बर्बरे लोहदानकम्  ३९

मुखव्रणे नागदानं गोदानं बहुपुन्नके
नेत्ररोगे घृतं दद्यात्सुगन्धं नासिकागदे  ४०

तैलदानञ्च कण्डूके रसदानञ्च जिह्वके
श्यावन्दतेन देवानां सत्कृतिः प्रविधीयते  ।

ओष्ठरोगेऽपि तद्वच्च लूतारोगे ददेत गाः  ४१

अन्यांश्च कथयिष्यामि मनुष्याणां शरीरगान्
लज्जितः परनिन्दायां परमर्केन काणगः  ४२

खुरहा स्याद्वक्रनासः पक्षाघातेन पक्षहा
वामनः स्वप्रशंसायां परद्वेष्टातिपिङ्गलः  ४३

परस्य कृत्यकर्त्ता च जायते विकृतात्मकः
एते महागदाश्चान्ये जायन्ते पापसम्भवाः  ४४

यदिवात्र न सिध्येत्तु परभावो भवेन्न च
अतो हि प्रायश्चित्तं तु कारयेद्भिषजां वरः  ४५

भूयो जन्मान्तरे यावत्पापं रोग्यथ भुञ्जति
प्रायश्चित्ते कृते वापि न पुनर्जायते भवे  ४६

इति आत्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने पापदोष प्रतीकारो नाम
प्रथमोऽध्यायः  १

## द्वितीयोऽध्यायः

आत्रेय उवाच
शृणु पुत्र समासेन यथा वत्स प्रकाश्यते
तथारिष्टपरिज्ञानं भेषजं सम्प्रवक्ष्यते  १

वातिकः पैत्तकश्चैव भयाद्धीनबलादपि
मूत्रान्विष्टे सपित्ते च षट्स्वप्नानि च वर्जयेत्  २

संवत्सरेण फलदो हि भवेन्निशायां
यामे तु दृष्टःप्रथमे फलदः शुभस्य
स्याद्वत्सरार्द्धमतियाममथ द्वितीये

मासत्रये फलदो भवति तृतीये ३

निशावसाने प्रवदन्ति किञ्चिद्दशाहकः स्यात्फलदो मनुष्ये
वर्षादिने स्यात्तमुशन्ति शान्ताः षाण्मासिको मध्यदिने प्रदिष्टः ४
स्वप्नेषु शुभ्राणि शुभानि धीराः सर्वाणि चैमानि विवर्जयित्वा
कार्पासभस्मास्थिकपालशूलं कुर्यान्नराणां विपदं रुजं वा ५

सर्वाणि कृष्णानि विनिन्दितानि स्वप्ने नराणां विपदं रुजं वा
कुर्वन्ति चैतानि हि वर्जयित्वा गोवाजिराजद्विजहस्तिमत्स्यान् ६

मुकुरकुसुमशृङ्गारातपत्रं ध्वजं वा
दधि फलमथ वस्त्रं चान्नताम्बूलवस्त्रम्
कमलकलशशङ्खं भूषणं काञ्चनस्य
भवति सकलतम्पच्छेयसे रोगिणाञ्च ७

दिनकरनिशिनाथं मण्डलं तारकस्य
विकचकमलकुञ्जैः पूर्णपद्माकरं वा
तरति सलिलराशिप्रौढनद्याश्च पारं
घनसुखविभवाप्तिर्व्याधिनां रोगमुक्तिः ८

देवो द्विजो वा पितरो नृपो वा स्वप्नेषु वाक्यं वदते यथैव
तथैव नान्यच्च भवेन्मनुष्ये यद्यस्य सौख्यं विपदो रुजो वा ९

गोवाजिकुञ्जरनृपाः सुमनः प्रशस्तं
स्वप्नेषु पश्यति नरः सरुजः सुखाय
रोगान्वितश्च रुजनाशनसम्भवाय
बद्धोऽपि वै सपदि बन्धविमोचनाय १०

यो भूषणं पश्यति मन्दिरं वा कन्यां दधि मीनकुमारकं वा
सपुष्पवल्लीफलितं द्रुमं वा स्वस्थे धनाप्तिं रुजनाशनाय ११

स्वप्ने पयःपानमतिप्रशस्तं पानं सुराया अजभोजनं वा
घृतं यवागूःकृसरोदनं वा चैरेयिकं भोजनकं सुखाय १२

सितो भुजङ्गो दशति कराग्रे नरस्य सुप्तस्य शरीरकेषु
पुत्रस्य लाभं वदते धनं वा नाशं विदध्यादचिराद्रुजां वा १३

सश्वेतवस्त्रां रमणीं सुरम्यां स्वप्ने समालिङ्गति यो मनुष्यः
तस्य प्रकर्षेण सुखं श्रियः स्यात्सुपुत्रलाभश्च रुजां विनाशः १४

यो धान्यपुञ्जं तिलतण्डुलानां गोधूमसिद्धार्थयवादिकानाम्
धान्याप्तिरस्यामयनाशहेतुः स्वप्नेषु शीघ्रं मनुजे सुखाय १५

सफले धनसम्पत्तिर्दीप्ते रोगविनाशनम्
सुखञ्च पुष्पिते ज्ञेयं सम्पूर्णे वाञ्छितं फलम् १६

काकैः कङ्कैः करभभुजगैः सूकरोलूकगृध्रै-
र्जम्बूकैर्वा वृकखरमहिष्यातिरक्षैः श्वभिश्च
व्याघ्रैर्ग्राहैर्मकरकपिभिर्भक्ष्यमाणं स्वकायं
पश्येद्योऽसौ भजति नितरां हानिमापद्रुजं वा १७

योऽभ्यञ्जितं स्वं मनुजः प्रपश्येत्
सर्पिर्वसातैलविशेषणेन
शीघ्रं रुजाप्तिर्भवतीह तस्य
वदन्ति धीरा निपुणं विधेयम् १८

रक्तवस्त्रां कृष्णवस्त्रां मुक्तकेशां विसर्पिणीम्
याम्यां स्थितां रुदन्तीं वा गायन्तीमथ पश्यति २०

अथाह्वयति संक्रुद्धाँ समालिङ्गति चर्वति
यः पश्यति सुखी स स्याद्व्याधितो मृत्युमृच्छति २१

यस्य स्वप्ने च निष्कुष्ठदन्तपातः प्रदृश्यते
शीर्यन्ते केशरोमाणि स सुखी चापदं व्रजेत्  २२

यस्य खट्वा प्रभज्येत तोमरादिप्रहारतः
रक्तञ्च दृश्यते देहे सस्वस्थो व्याधिमृच्छति  २३

शून्यागारं पश्यति यो मनुष्यः प्रासादं वा देवहीनञ्च पश्येत्
तापश्चान्द्रे पुष्पितानां द्रुमाणां तस्यानिष्टं मृत्युमाशु प्रपद्येत्  २४

विपश्येन्नरोभिन्नदेवं घटं वाथवा भग्नशाखं तरुं मन्दिरं वा
विशीर्णं विपश्येत्सुखी व्याधिपुञ्जं प्रपद्येद्रुजाग्रस्त आशु म्रियेत  २५

यस्याह्वयन्ति पितरो दिशि दक्षिणस्यामाश्रित्य चाशु तनुते मनुजस्य मृत्युम्
।
यस्यास्ति शूललकुटोद्यतपाशपाणिराह्वयति स मृतिमाशु तनोति कष्टम्  २६

कार्पासभस्मास्थिकपालशूलं चक्रञ्च पाशञ्च स्वप्ने प्रपश्येत्
तस्यापदो रोगधनक्षयौ वा रोगी मृतिं वा तनुतेऽतिकष्टम्  २७

इति प्रदिष्टानि शुभानि तानि निशासु सुप्ते मनुजे विशेषात्
तथाशु विज्ञाय महामते त्वं गदस्य नाशाय विधेहि मन्त्रम्  २८

स्नानञ्च दानञ्च सुरार्चनञ्च होमं तथा भाग्यविधानतश्च
दुःस्वप्नमेतेषु विनाशमेति शुभञ्च सौख्यञ्च तनोति शीघ्रम्  २९

इति आत्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने स्वप्नाध्यायो नाम द्वितीयोऽध्यायः
२

## तृतीयोऽध्यायः

आत्रेय उवाच
शृणु पुत्र महाप्राज्ञ सर्वं देहार्थसाधकम्

वैद्यशास्त्रस्य सारं यत्स्वास्थ्यारिष्टञ्च मानवे १

यो न पश्येद् ध्रुवं सम्यक्स्वर्णं वा मनुजो बुधः
तस्य षरामासमध्ये तु मृतिश्चैवोपपद्यते २

यो वै द्वितीयां हिमधामलेखां नरो न पश्येद्द्विजहानिरस्य
मासत्रयं प्राप्य शरीरमाशु जीवो व्रजेत्तस्य यमस्य लोकम् ३

यः कर्णघोषं न शृणोति दृप्ता मृताश्च यूकाः प्रपतन्ति लाभात्
या वैपरीत्यं विशृणोति शब्दं मासद्वयं प्राप्य जहाति जीवम् ४

यः स्वस्थदेहः श्वसते मुखेन नेत्रेऽरुणे श्यावमथैव वक्त्रम्
जिह्वा विशीर्णा दशनाश्च कृष्णा स्वस्थोऽपि शीघ्रं यमलोकगन्ता ५

यस्य प्रभाते च शिरोव्यथा स्याद्दीपे परीवेषमवेद्दयमाणः
विपश्यते यः पटलञ्च रेणोः स वै मृतिं याति न दीर्घमायुः ६

यः सूर्यबिम्बे शशिनं प्रपश्येद्विना परीवेषमवेद्दयमाणः
धूमावृतं वा रविमराडलञ्च प्रपश्यते शीघ्रमृतिं स गन्ता ७

स्वस्थे निरभ्रे गगने च पश्येद्यः शक्रचापं विदिशादिशासु
तथैव विद्यान्नयनाग्रतो यः स शीघ्रमेव यमलोकगन्ता ८

यो नेत्रे मीलितेऽपि द्युतिमथ चपलां पश्यते यः पुरस्तात्कर्णे रन्ध्रं
निरुध्याद्ध्वनिमथ मनुजो न शृणोति कथञ्चित् ९

तिक्तादीनां रसानां कथमपि रसनास्वादमात्रं न वेत्ति रौद्रं वैवस्वतस्य
प्रतिगमनमथो पश्यते मानुषश्च १०
यस्यात्युष्णं शरीरं शिशिरमथ मनूजस्य यस्याविलञ्च शीतं नो चेति यस्य
हिमजलसिकते रोमहर्षो न यस्य । दराडाघातेन राजा न भवति स पुनः
श्राद्धदेवस्य लोके लोकानां दर्शनाय द्रुतमतिरुचिरां स्वस्थतां न प्रयाति ११

तैले जले दर्पणके घृते वा परस्य नेत्रे प्रतिबिम्बमात्मनः
पश्येन्न योऽसौयमलोकगन्ता जानीहि तं जीवविहीनमेव १२

इति आत्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने स्वास्थ्यारिष्टं नाम
तृतीयोऽध्यायः ३

चतुर्थोऽध्यायः

आत्रेय उवाच
उपद्रवैश्च ये पुष्टा व्याधयो यान्ति वार्यताम्
रसायनादिना वत्स तान्मकैकमनाः शृणु १

वातव्याधिः प्रमेहश्च कुष्ठमर्शो भगन्दरम्
अश्मरी मूढगर्भश्च तथा चोदरमष्टमम् २

अष्टावेते प्रकृत्यैव दुश्चिकित्स्या महागदाः ३

प्राणमांसक्षयश्वासतृष्णाशोषवमिज्वरैः
मूर्च्छातिसारहिक्काभिः पुनरेतैरुपद्रुताः ४

वर्जनीया विशेषेण भिषजा सिद्धिमिच्छता ५

यस्य जिह्वा भवेत्तीव्रा पीता वा नीलसम्भवा
श्वासो भवत्यतीवोष्णः शरीरं पुलकाङ्कितम् ६

नीलनेत्रेऽरुणे पीते कण्ठो घुरघुरायते
न जीवति ज्वरार्त्तस्तु लक्षणं यस्य चेदृशम् ७

मुखे श्वासो भवेद्यस्य श्यावा दन्तावली पुनः
स्तब्धनेत्रो बलाद्यः स्याज्ज्वरार्तो नैव जीवति ८

बहुमूत्री बहुश्वासी क्षामोऽरोचकपीडितः
हतप्रभेन्द्रियो यश्च ज्वरीशीघ्रं विनश्यति ९

यस्यास्ये श्रयते रक्तं शिरोर्त्तिर्यस्य दृश्यते
अन्तर्दाहो बहिःशीतो ज्वरस्तु मृत्युमृच्छति १०

यस्ताम्यति विसंज्ञस्तु शेते विपतितोऽपि वा
शीतार्दितोऽन्तरुष्णश्च ज्वरेण म्रियते नरः ११

यो हृष्टरोमा रक्ताक्षो हृदि सङ्घातशूलवान्
नित्यञ्च वक्त्रेणोच्छ्वासः स ज्वरो हन्ति मानवम् १२

हिक्काश्वासपिपासार्त्तं मूदं विभ्रान्तलोचनम्
सन्ततोच्छ्वासिनं क्षीणं नरं क्षपयति ज्वरः १३

आविलाक्षं प्रताम्यञ्च तन्द्रायुक्तमतीव च
क्षीणशोणितमांसञ्च नरं नाशयति ज्वरः १४

घनं निष्ठीवनं नेत्रं प्लावारोचकपीडितम्
अन्तर्दाहोऽसिता जिह्वा शीघ्रं नाशयति ज्वरः १५

यश्चैकोपद्रवस्यार्त्तैः शाम्यता नोपदृश्यते
दारुणोपद्रवाश्चान्ये भूयिष्ठं बहुरूपवान् १६

तेन मृत्योर्वशं याति सिद्धिं नेच्छति दारुणः १७

यस्यादौ दृश्यते चैवाप्यतीसारस्तथापरः
श्वासः शोषश्च यस्य स्यात्सोऽपि शीघ्रं मृतिं व्रजेत् १८

श्वासशूलपिपासार्त्तं क्षीणं ज्वरनिपीडितम्
विशेषेण नरं वृद्धमतीसारो विनाशयेत् १९

यस्यातिसारशोफाः स्युस्तयारोचकशूलवान्
सोऽपि शीघ्रं मृतिं याति बहुभिः प्रतिकर्मभिः २०

बालस्य चातिवृद्धस्य विकलस्य नरस्य च
सर्वाङ्गे जायते शोफः शोफी स म्रियते ध्रुवम्  २१

यस्याध्मानञ्च शूलञ्च श्वासस्तृष्णा विमूर्छना
शिरोऽर्त्तिर्यस्य दृश्येत शूली मृत्युमवाप्नुयात्  २२

पाण्डुदन्तनखो यश्च पाण्डुनेत्रश्च मानवः
पाण्डुसङ्घातवांश्चैव पाण्डुरोगी विनश्यति  २३

पाण्डुत्वक्पाण्डुनेत्रं च मूत्रं वा पाण्डुरं भवेत्
पाण्डुसंवातवांश्चैव पाण्डुरोगी विनश्यति  २४

शुक्लाक्षमन्नद्वेष्टारमूर्ध्वश्वासनिपीडितम्
कृच्छ्रेण बहुमेहन्तं यक्ष्मा हन्तीहमानवम्  २५

धातुहीनो भवेद्यस्तु शोफश्वासैर्निपीडितः
बहुभोज्यो घृणावांश्च राजयक्ष्मी विनश्यति  २६

हुंकारः शीतलो यस्य फूत्कारस्योष्णता भवेत्
शीघ्रनाडी न निर्वाहः शीघ्रं याति यमालयम्  २७

अङ्गकम्पो गतेर्भङ्गो मुख वा कुंकुमप्रभम्
उच्चारे च भवेद्वायुः स च याति यमालयम्  २८

चिरं प्रवृद्धरोगस्तु भोजनेऽप्यसमर्थकम्
भग्नगात्रमुपेक्षेत भेषजोऽप्यरहस्यकम्
एतादृशं नरं ज्ञात्वोपचारः क्रियते बुधैः  २९

विट्ध्वंसश्वासशोफाद्य तथा ज्वरपीडनात्
गम्भीरं सघनं तस्य तदुरः क्षयते नरम्  ३०

श्वासशूलपिपासार्तिर्विद्वेषो ग्रन्थिमूढता
दुर्बलत्वञ्च भवति गुल्मिनो मृत्युमेष्यतः ३१

नेत्रे जिह्वाधरौ यस्य रक्तौ वा रुधिरं वमेत्
रक्तमूत्री रक्तसारी रक्तपित्ती विनश्यति ३२

लोहितं छर्दयेद्यस्तु बहुशो लोहितेक्षणः
रक्तानाञ्च दिशां द्रष्टा रक्तपित्ती विनश्यति ३३

मुखशोफो भवेद्यस्य भ्रमारोचकपीडितः
विबन्धोदरशूली च उदयाच्च विनश्यति ३४

आध्मानबद्धनिष्पन्दं छर्दिहिक्कारुगन्वितम्
रुजाश्वाससमाविष्टं विद्रधिर्नाशयेन्नरम् ३५

यस्य तृष्णा भवेद्धोरा दाहो वापि वमिर्भवेत्
भ्रमोपपन्नो भवति न स जीवति मानवः ३६

अपूर्णे दिवसे नारी ज्वरार्त्ता पुष्पमाप्नुयात्
सा न जीवेन्महाप्राज्ञ यस्या हि सारणो भवेत् ३७

यः शोफश्वाससंयुक्तस्तृष्णायुक्तोऽथ शूलवान्
कामलापाण्डुरोगार्त्तो नरश्च स विपद्यते ३८

वातमूत्रपुरीषाणि क्रिमयः शुक्रमेव च
भगन्दरात्प्रस्रवन्ति यस्य तं परिवर्जयेत् ३९

प्रसूननाभिवृषणं रुद्धमूत्रं रुगन्वितम्
अश्मरी क्षपयत्याशु सिकताशर्करान्विता ४०

गर्भकोपसमापन्नो मकुष्टो योनिसङ्गतः

हन्ति स्त्रियं मूढगर्भे यथोक्ताश्चाप्युपद्रवाः ४१

पार्श्वभङ्गान्नविद्वेषशोफातीसारपीडितम्
बहुशोऽपस्मरन्तन्तु क्षीणञ्च वलितभ्रुवम् ४२

नेत्राभ्याञ्च विकुर्वाणमपस्मारो विनाशयेत् ४३

शूलं सुप्तत्वचं भग्नमाध्मानेन निपीडितम्
रुजार्त्तिमन्तञ्च नरं वातव्याधिर्विनाशयेत् ४४

यथोक्तोपद्रवाविष्टमतिप्रस्त्रुतमेव च
पिडकापीडितं गाढं प्रमेहो हन्ति मानवम् ४५

प्रभिन्नं प्रस्त्रुताङ्गञ्च रक्तनेत्रं हतस्वरम्
पञ्चकर्मगुणातीतं कुष्ठं हन्तीह कुष्ठिनम् ४६

अवाङ्मुखस्तून्मुखो वा क्षीणमांसबलोत्तरः
जागरूकस्त्वसन्देहमुन्मादेन विनश्यति ४७

इति आत्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने व्याध्यरिष्टं नाम चतुर्थोऽध्यायः ४

## पञ्चमोऽध्यायः

आत्रेय उवाच
यः शीलवान्क्रोधनतामुपैति यः क्रोधवाञ्छीलगुणञ्च धत्ते
द्वावेव मृत्युं तनुतो विधिज्ञ स्थूलो नरः शीघ्रतरं कृशाङ्गः १

यो धर्मशीलो भवतीह पापी पापात्मको धर्मरतो यदि स्यात्
स मृत्युभाजी भवतीह शीघ्रं यश्च प्रकृत्या विकृतिं प्रयाति २

यो गौरवर्णो विदधाति कार्ष्णयं कृष्णोऽतिगौरत्वमुपैति यश्च
तथा मृतिं याति नरः प्रकृत्या शीघ्रं विकृत्या भजते वियोगम् ३

यो वैपरीतं श्रवणेऽपि शब्दं गृह्णाति वा न शृणुते स शीघ्रम्
स वै मृतिं पश्यति यो न पश्येच्छायां स्वकीयां धरणीप्रपन्नाम्  ४

यो वेन्द्रियैः प्रतिहतः कृशतां प्रयाति
स्थूलोऽतिनिष्प्रभवपुर्मरणं विपश्येत्
यो विस्रगन्धिञ्च रसञ्च क्वचिन्न वेत्ति
स वै मृतिं प्रियतामां भजते मनुष्यः  ५

यस्यास्यगन्धमाघ्राय भजन्ते नीलमक्षिकाः
नासिकायां शरीरे वा स चैव यमलोकगः  ६

इति आत्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने पञ्चेद्रियविकारो नाम
पञ्चमोऽध्यायः  ५

षष्ठोऽध्यायः

आत्रेय उवाच
अथ नक्षत्रयोगेन व्याधिर्यस्य प्रजायते
साध्यासाध्यञ्च याप्यं च वक्ष्यामि शृणु पुत्रक  १

आदित्ययोगेन मघा विशाखा चन्द्रेण युक्ता कुज आर्द्रया तु
मूलं प्रबुद्धे गुरुकृत्तिका च शुक्रेण रोहिण्यसितेन हस्तः  २

एतान्वदन्ति निपुणा यमघण्टयोगान्
व्याधिप्रपन्नमनुजो यदि पुण्ययोगात्
जीवेद्यदा कथमसौ घनदत्तयन्त्र-
घोरान्तरेण तपने न कथं सुखं स्यात्  ३

आदित्येनानुराधा वसति हिमरुचिश्चोत्तरासम्प्रयुक्तो
भौमः पित्रीशयुक्तो बुध इति तुरगीयुक्त एतत्सुखं न ।
तस्माज्जीवेन युक्तो मृगशिरस हितोऽश्लेषया भार्गसूनुः युक्तोर्किर्हस्तसंज्ञैर्न तु
वदति शुभं शास्त्रविद्योगयुक्तः  ४

दिनकरकरयुक्तः सोमसौम्येन वापि तुरगसहित भौमः सोमपुत्रोऽनुराधा ।
सुरगुरुरपि पुष्ये रेवती शुक्रवारे दिनकरसुतयुक्ता रोहिणी सौख्यहेतुः  ५

शूले वज्रेऽतिगण्डे वा व्याघाते व्यतिपातके
विष्कम्भयोगयुक्ते च नक्षत्रे क्रूरदैवते  ६

एतैरसाध्या ज्वरिणस्तस्माद्योगान् परीक्षयेत्
योगे ऋक्षे तथा वारे क्रूरे प्राप्ते न जीवति  ७

सिद्धिः शुक्लः शुभः प्रीतिरायुष्मान्सौभगश्चवै
धृतिर्वृद्धिर्ध्रुवो हर्षः सुखसाध्या इमे स्मृताः  ८

मघा विशाखा भरणी तथार्द्रा मूलं तथा कृत्तिकहस्ततिष्याः
एते न शस्ता मुनयो वदन्ति वारक्रमेणैव विचिन्तनीयाः  ९

मघाभरणिहस्तेषु मूले वा ज्वरितोऽपि वा
मृत्युमापद्यते सोऽपि नात्र कार्या विचारणा  १०

अश्विनीरोहिणीपुष्यमृगज्येष्ठाः पुनर्वसू
एते साध्याश्च विज्ञेया ज्वरिणाञ्च विशेषतः  ११

पूर्वात्रयं स्वातिरथापि चित्रा तथा त्रयार्द्राश्रवणाधनिष्ठाः
मूलं विशाखा सह कृत्तिकाभिः सार्प्योऽनुराधा सह ज्येष्ठया च  १२

एते सकाष्ठा रुजपीडितानां तिष्या सुयाप्या कुरुते नरस्य
तस्मात्तु विज्ञाय बुधाश्च सम्यग्रुजां विनाशं प्रतिकर्मणा च  १३

अश्विन्याञ्चैकरात्रन्तु भरण्यां मृत्युमीक्षते
नवरात्रं कृत्तिकायां रोहिण्यान्तु दिनत्रयम्  १४

मृगेण बहुपीडा स्यादार्द्रायां मृत्युरेव च

पुनर्वसौ च पुष्ये च सप्तरात्रन्तु पीड्यते १५

नवरात्रं तथाश्लेषा मघा चैति यमालयम्
पूर्वा मासत्रयं ज्ञेयमुत्तरा पञ्चकत्रयम् १६

पूर्वात्रये त्रयोंऽशाश्च शुभा ज्ञेया मनीषिभिः
एतेषां तुर्यगे चान्ते यदि रोगस्तदा मृतिः १७

हस्तेन प्राप्यते सौख्यं चित्रा पञ्चदशाहकम्
स्वातिः षोडशरात्रन्तु विशाखा विंशरात्रकम् १८

अनुराधा पक्षमेकं ज्येष्ठा दशदिनानि तु
मूलेन मृत्युमाप्नोति आषाढासु त्रिपञ्चकम् १९

उत्तरा विंशरात्रे श्रवणे मासकद्वयम्
मासद्वयं धनिष्ठा स्याच्छतर्क्षे दिनविंशतिः २०

नवरात्रं भवेत्पूर्वा उत्तरा पञ्चकत्रयम्
दशाहं रेवती पीडा मुच्यते व्याधिभिस्ततः २१

कृत्तिकासु ज्वरस्तीव्रो व्याधिर्भवति पैत्तिकः
दिनानि दश प्रथमे चरणे च विनिर्दिशेत् २२

दशैव द्वितीये भागे तृतीये दिनपञ्चकम्
रोहिण्यां नवरात्रन्तु प्रथमेंऽशे प्रकीर्त्तितम् २३

द्वितीये द्विगुणं प्रोक्तं तृतीये दशरात्रकम्
नक्षत्रे चन्द्रदैवत्ये पीडा वै जायते ध्रुवम् २४

प्रथमांशे पञ्च रात्रं मध्ये द्वादशवासरान्
तृतीयांशे तथा ज्ञेयं मृत्युर्मासादनन्तरम् २५

नक्षत्रे रुद्रदैवत्ये पक्षं स्यात्प्रथमेंऽशके
द्वादशाहं द्वितीये च तृतीयांशे न जीवति २६

पुनर्वसौ ज्वरं विद्यात्प्रथमांशे त्रिपक्षकम्
मध्यमे दिवसान्सप्त तृतीये पञ्चविंशतिम् २७

पुष्ये स्यात्प्रथमे सप्त द्विके विंशतिवासरान्
तृतीयांशे तथा विन्द्याद्दिवसानेकविंशतिम् २८

आश्लेषायां च नक्षत्रे यस्य सम्भवति ज्वरः
मासत्रयेण प्रागंशे कष्टाज्जीवति मानवः २९

द्वितीये च तृतीये च मृत्युरेव न संशयः
नक्षत्रे पितृदैवत्ये रोगो यस्य प्रवर्तते ३०

प्रथमेंऽशे सप्तरात्रं द्वितीये धिष्ण्यतुल्यताम्
विंशत्तृतीये दिवसान्पीड्यते कर्मणो बलात् ३१

नक्षत्रे भगदैवत्ये यस्य सञ्जायते ज्वरः ३२

प्रथमेंशे पञ्चरात्रं मध्ये द्वादशवासरान्
तृतीयांशे तथा ज्ञेयं मृत्युर्मासादनन्तरम् ३३

उत्तराया आद्यभागे वासराणि चतुर्दश
द्वितीये सप्तरात्रन्तु तृतीये दिवसा नव ३४

यदि हस्ते भवेद्रोगः प्रथमे सप्तरात्रकम्
चत्वार्यहानि द्वितीये तृतीये दिनपञ्चकम् ३५

मृत्युं विद्यात्तथा पूर्वे त्वाष्ट्रो यस्य भवेज्ज्वरः
त्रिभिर्मासैर्द्वितीयांशे रोगो भवति दारुणः ३६

तृतीयांशे तथा ज्ञेयं वातरागि त्रयोदश
वायव्ये प्राक् सप्तदश द्वितीये चैकविंशतिः ३७

अस्यैव तु तृतीयांशे मृत्युमेव विनिर्दिशेत् ३८

प्रथमांशे विशाखायां त्रिगुणाः षोडश स्मृताः
द्वितीये द्वादश प्रोक्तास्तृतीयेऽपि तथैव च ३९

मैत्रांशे प्रथमे सप्त द्वितीये पक्षमादिशेत्
तृतीयांशे चतुःषष्टिर्वासराणां महामुने ४०

त्रिपक्षमैन्द्रे प्रथमे द्वित्रिभागे च षोडश ४१

मूलेंऽशे तृतीये ज्ञेयः पक्ष एव मनीषिभिः
आद्ये पूर्वत्रयो मासा मध्यमेऽहानि षोडश ४२

पूर्वांऽशे द्वितये ज्ञेयः पक्ष एव मनीषिभिः
तृतीयांशे पुनर्मृत्युरतीरात्रात्प्रजायते ४३

विश्वंशे प्रथमे पक्षे मध्ये द्वादशरात्रिकम्
दिनानां विंशतिः प्रोक्ता तृतीयांशे महामुने ४४

सप्ताहमादौ श्रवणे विंशतिर्मध्यमे मता
षोडशाहं तृतीयांशे सत्यमेतद्ब्रवाम्यहम् ४५

विंशतिर्वासवे पूर्वं मध्यमे मासयुग्मकम्
मासस्तृतीये विज्ञेयो दैवज्ञैश्च निवेदितम् ४६

वारुणे दारुणी रोगस्त्रिपक्षं प्रथमांशके
द्वितीये मासषट्कं तु षोडशाहं तृतीयके ४७

अहिर्बुध्न्ये पक्षमादौ मध्ये मासं विनिर्दिशेत्

अन्तेऽष्टाविंशतिर्ज्ञेया पीडास्यात्पापकर्मणि ४८

रेवत्याः प्रथमे चाष्टौ द्विभागे तु च षोडश
अन्ते त्रिंशद्दिनान्येवं प्रोक्तानि पूर्वसूरिभिः ४९

अश्विन्याः प्रथमे भागे दिनमेकं प्रकीर्त्तितम्
द्वितीये पञ्चरात्रन्तु तृतीये सप्तकं तथा ५०

भरण्याः प्रथमे चांशे सप्तवासरमेव च
मध्ये मृत्युस्तथा चान्ते रोगो मासत्रयावधिः ५१

एवं ज्ञात्वा सुधीः सम्यक्कुर्यात्प्रशमनक्रियाम्
नक्षत्रस्य त्रयो भागा आत्रेयेण प्रकाशिताः ५२

इति आत्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने नक्षत्रज्ञानं नाम षष्ठोऽध्यायः ६

## सप्तमोऽध्यायः

आत्रेय उवाच
अर्कः खदिरपालाशबदर्यः पारिभद्रकः
दूर्वा शमीकुशः काशः पिप्पलो वटभूरुहः १

जम्ब्वाम्रौ करहाटश्च सोमवृक्षः कलिद्रुमः
रक्तसारश्चन्दनश्च जयन्ती गुरुवृक्षकम् २

सहचरी सितावर्षा सर्वौषधिनिशायुगम्
समिद्वर्गः समस्तोऽपि समिद्धोमः प्रकाशितः ३

चन्दनं रक्तचन्दनं गोरोचना हरिद्रा गैरिकनिम्बबिल्वं कदम्बं कुंकुममिश्रित-कस्तूरिका घनसारं श्रीपर्णं सुरदारु हरिचन्दनं पद्मकं हरिद्राद्वयं कालीयका-गुरुशिंशपा रक्तगोरोचना पलाश इति गन्धानि पद्मबिल्वसुरसादूर्वाकुश-जयन्तीशमीपत्रार्ककिंशुककर्णिकारगिरिकर्णिकासहचरालूषपुष्पाणि जम्बा-म्रपल्लवानि काञ्चनारपाटलावर्वरी अगस्तिः काककाह्लारी अशोकपुष्पमिति

धूपदीपादिभिरलङ्कारैरलंकृतं वास्तुमराडलं कृत्वा ईशानदिक्क्रमेण नक्षत्रमराडलं चार्चयेत् । तन्मराडलकमध्ये आदित्यादीन् ग्रहान् समभ्यर्च्य क्रमेण समिद्भिर्होमं कुर्यात् । तस्मात्पुनर्दधिमधुघृताक्ताभिः समिद्भिरश्विन्यादिक्रमेण जुहुयात् । आकृष्णेति अर्कसमिद्भिरिदम् अश्विन्यै विष्णोरराटमसीति पलाशेन इदं भरण्यै मधुमाध्वीति बदरीसद्भिरिदं कृत्तिकायै काराडात्काराडेति पारिभद्रकपूर्वकुशसमिद्भिः रोहिणीमृगशिरःपुनर्वस्वादीन् काराडेति होमयेत् । इदं देव इति पिप्पलसमिद्भिरिदं पुष्याय सप्तत्यग्निमन्त्रेण चूतसमिद्भिरिदं सार्प्ये अग्निमूर्द्धादिवइति जम्बूसमिद्भिर्मघां होमयेत् । सद्योजाताभिः करहाटकसमित्पूर्वसमिद्भिर्होमयेत् । तत्पुरुषाय विद्महे इति सोमवल्ली समिद्भिरुत्तरात्रयं नमो घोराय विभीतकसमिद्भिर्हस्त होमयेत् । नमो ज्योतिष्पतये रक्तसारसमिद्भिश्चित्रां होमयेत् । नमो देवाय नमो ज्येष्ठायेति चन्दनसमिद्भिः स्वात्यै होमं कुर्यात् । उदुम्बरजयन्तीसमिद्भिर्विशाखां होमयेत् । बृहते इति यदुपतये गुरुवृक्षकसमिद्भिरनुराधां होमयेत् । एतज्ज्योतिःसहचरीसमिद्भिर्ज्येष्ठां काराडात्काराडेति शतावरीसमिद्भिर्मूलमिष्टं स्तौति । निशायुगसमिद्भिः पूर्वाषाढामुत्तराषाढां मधुवातेति उदुम्बरसमिद्भिः श्रवणं त्र्यम्बकमिति बिल्वसमिद्भिर्वासवप्रभृतीनि होमयेत् । घृतेन पूर्णाहुतिं दद्यात् । नवग्रहस्थापनं चतुरस्रेण होमकुराडे होमयेत् । तस्मादभिषेकस्नानमाचरेत् । शुक्लवस्त्रोपवीतं यज्ञोपवीतसहितं रोगिणं कृत्वा वेदादिभिराशिष्य गोभूवस्त्रहिररायादिदानं कुर्यात् । इति विधाने कृते सम्यक् शान्तिर्भवति ४

इति आत्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने होमविधिर्नाम सप्तमोऽध्यायः ७

## अष्टमोऽध्यायः

आत्रेय उवाच

अथातो गदग्रस्तानां दूतारिष्टं भिषग्वर
शुभं वाशुभमेवान्यत्समासेन प्रचक्ष्यते १

आतुरस्योपकारार्थं दूतो याति भिषग्गृहे
तस्य परीक्षणं कार्यं येन संलक्ष्यते गदः २

खञ्जान्धमूकबधिरं रुजपीडितं वा बालं
स्त्रियञ्च विकलं तृषितं विजीर्णम्
श्रान्तं चुधातुरमपि भ्रमितञ्च दीनं दूतं
न शस्तमिह वेदविदो वदन्ति  ३

कषायकृष्णार्द्रकवाससा च तथैव वस्त्रावृतमस्तकेन
अश्रुप्लुतैर्वा नयनैश्च युक्ताः केशैस्तथा मुण्डितमस्तकश्च  ४

समर्कटाद्योर्ध्वशिरोरुहश्च खर्वस्तथा वामनकृत्तनासः
एतान्न शंसन्ति विदो मुनीन्द्रा दूतान्नराणां रुजनाशनाय  ५

यः कर्कशः क्रोधनपाशपाणिर्भिषग्विदूषी तमसावृतश्च
एते न शस्ताः प्रवदन्ति धीरा दूता विकारञ्च प्रवर्द्धयन्ति  ६

यः काष्टहस्तोद्धतपाशपाणिस्तथातुरोदीनवचो हि रोदिति
प्रक्लिन्ननेत्रो गमनोत्सुकोऽपि वर्ज्यो रुगार्त्तोशुभकारिदूतः  ७

यो रज्जुहस्तोद्धतपाशपाणिर्याम्यां दिशञ्च परिभूयतूर्णम्
यो वावदीति प्रबलं सरोषस्तथा समागम्य वदेच्च दूतः  ८

लगुडं हस्तेऽवष्टभ्य वक्रपादेन तिष्ठति
तस्मादाकुलवादी यो न शस्तो वैद्यकर्मसु  ९

पथा गच्छति शीघ्रेण आविश्योत्थाय मुह्यति
पादौ प्रसार्य विशति मस्तके विन्यसेत्करम्  १०

भिनत्ति लोहकाष्ठञ्च तृणं वा स्फोटते क्वचित्
एतानि स्पृशते नासां स्तनं वा स्पृशति पुनः  ११

भूमिं लिखति पादेन रेखां वापि करोति यः
निद्रां वा कुरुते यस्तु स दूतोऽनिष्टकारकः  १२

यः श्वेतवस्त्रावृतपूर्णपाणिः सम्पूर्णताम्बूलमुखः प्रशस्तः
द्विजस्तथा माणवकः सुशीलः प्रज्ञाधिकश्चाह्वयते सुखाय १३

कुसुममुकुरवक्त्रं यस्य स्यात्सर्वदापि
श्रमविकचसरोजंपद्मकिञ्जल्कपुष्पम्
करतलवरवस्त्रं पुष्पपूगाङ्गरागं
करतलधृतमेतत्सौख्यकर्त्ता हि दूतः १४

आगत्योदीच्यपूर्वामथवरुणदिशमैशीमाश्रित्य शान्तो
दृष्ट्वा वैद्यं प्रहस्य प्रवदति निपुणं नातिनीचं न चोच्चम्
उत्तिष्ठ त्वं प्रसादं कुरु पवन इदं सौख्यवाक्यं तनोति
प्राज्ञैः स्वार्थं प्रकृष्टं सुखमगदकरं रोगिणां वैद्यलाभः १५

पूर्वां दिशं समासाद्य प्रशान्तः शान्तया गिरा
वैद्यं वदति लाभाय रोगिणाञ्च सुखावहम् १६

यश्चागत्योपविष्टोऽपि श्लोकं वाथ सुभाषितम्
वदते शान्तया वाचा सोऽपि लाभाय शान्तये १७

अभिवाद्यस्य वैद्यस्य क्षेमं पृच्छति यः पुनः
फलं ददाति पुष्पं वा रोगिणाञ्च सुखावहम् १८

यस्य सौख्यं सुखं सिद्धिस्तस्य दूता इदं विदुः
किमत्र बहुनोक्तेन दूतो नरसुखावहः १९

न हितमस्त्रीपुरुषं तस्मात्तु परिवर्जयेत्
एवं जानाति यो वैद्यस्तस्य सिद्धिः सुखं श्रियः २०

इति आत्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने दूतपरीक्षणलक्षणं नाम
अष्टमोऽध्यायः ८

## नवमोऽध्यायः

आत्रेय उवाच
इदानीं निर्गमे पुत्र प्रवेशे वा गृहस्य च
शुभाशुभानि सर्वाणि वक्ष्यामि शकुनानि च १

राजा गजो द्विजमयूरकखञ्जरीटाश्चाषः
शकुन्तरजकः सितवस्त्रयुक्तः
पुत्रान्विता च युवतो गणिका च कन्या श्रेयः
सुखाय यशसे प्रतिदर्शयन्ति २

लट्वा श्येनो भासहारीतचक्रो भारद्वाजश्छिक्करश्छागसंज्ञः
एते श्रेष्ठा दक्षिणे सव्यवामे वैद्यावेशे निर्गमे श्रेयसे च ३

सर्पोलूको वानरः सूकरश्च गोधा ऋक्षः कृकलासः शशश्च
एतेऽरिष्टा निर्गमे वा प्रवेशे कार्ये निर्घातोपकारेषु शस्ताः ४

मृगो वा पिङ्गलो वापि प्रशस्तो दक्षिणे सदा
निर्गमे वा प्रवेशे च दक्षिणे शुभदायकः ५

एको वा त्रयो वा पञ्च सप्त वा नवसंख्यया
भाग्यकाले नराणान्तु मृगा यान्ति प्रदक्षिणाः ६

शिखी च भवनगोधा रासभो भृङ्गराजः
पिकभषणकपोताः पोतकी सूकरी वा
तन्तु विहगराजो दीर्घकण्ठादयः स्युर्
वदति शकुनवेत्ता वामतो निर्गमे वा ७

तित्तिरः क्रकरः क्रौञ्चसारसाभाससूकराः
खगः किरीटी वामे तु सदा शुभतरा मताः ८

भवन्ति निर्गमे चैते सर्वकार्यसु सिद्धये ९

काको दक्षिणतः श्रेष्ठो निर्गमे शुभदायकः
प्रवेशे गदितः श्रेष्ठो वामतः कृष्णवायसः १०

जाहकोऽपि शशकोऽपि मर्कटः कीर्त्तनञ्च गदितं न सुखाय
न वै नाम न च दर्शनमेषां सर्पगोधाकृकलासबिडालाः ११

दर्शनं हितकरं प्रवदन्ति खञ्जरीटकमरालछिक्कराः
नामतः शुभकराः प्रवदन्ति दार्वघाटवरटकौ शुकश्च १२

निर्गमे विविधकार्यसिद्धये भृङ्गराजरजतं पयो जलम्
मत्स्यमांसरुधिरं मृतकं वा धौतवासमुकुरं पिधानकम् १३

मार्गं छिन्दन्ति मार्जाराः सर्पा वा कृकलासकाः
गोधा वापि प्रवेशे च पदमेकन्तु न व्रजेत् १४

प्रस्खलन्ति पादशिरसो वसनानि स्खलन्ति वा
विक्रुष्टं वचनं श्रुत्वा पदमेकन्तु न व्रजेत् १५

गृहाणां ज्वलनं दृष्ट्वा भिद्यते सजलं घटम्
पतनं भूरुहाणाञ्च दृष्ट्वा कुर्यान्न चङ्मम् १६

आक्रोशवचनं श्रुत्वा मार्जाराणां रुतं तथा
कलहं गृहलोकस्य दृष्ट्वा चंक्रमणं न च १७

कनककङ्कणमेव विभूषणं सफलपुष्पमथासववारुणी
फलमशोककरं ज्वरिणां तदा शुभकरो हि भवति भिषक् सदा १८

एवं ज्ञात्वा परमनिपुणं पानमन्नादिकानां
वीर्यं चैषां गुणमपि तथा कोपनं कोपवेगम् ।
आदानं वा पुनरपि चयं कोपनस्योपचारं
वैद्यो विद्वान्भवति भवने पूजितो राजलोकैः १९

इति ग्रात्रेयभाषिते हारीतोत्तरे द्वितीयस्थाने शकुनवर्णनं नाम नवमोऽध्यायः
९
द्वितीयं स्थानं समाप्तम् २

# अथ तृतीयस्थानम्
## प्रथमोऽध्यायः

आत्रेय उवाच
अथातः सम्प्रवक्ष्यामि रोगसङ्करकारणम्
श्रमाद्व्यायामरोधाद्वा चिन्ताशोकभयादपि १

क्रोधादौषधगन्धेन क्षयाद्धातोर्विशेषतः
उदीर्य कोष्टादग्निञ्च रक्तपित्तं तथा बहिः
त्वचाश्रितञ्च सम्भूय ज्वरं तस्मात्करोति हि २

उक्तहेतुर्ज्वरो वापि ज्वरान्मन्दज्वरो भवेत् ३

मन्दान्मन्दतमो ज्ञेयस्तस्मादम्लातिसेवनात्
जायते कामलस्तस्मात्प्ररूढे स्याद्धलीमकम् ४

हलीमकाद्भवेत्पाण्डुस्तस्माद्यस्मात्प्रकीर्त्तिताः
यक्ष्मणो जायते शोफः शोफादुदरमेव च ५

तस्माद्गुल्मञ्च वाताद्यं गुल्माच्छ्वासोऽथशूलिता
मन्दाग्नित्वं भवेत्तस्मात्स्वरभेदोऽथ रोधनः ६

एतेषां सर्वरोगाणामुत्पत्तिः स्याज्ज्वरेण तु
ज्वरेण मृत्युर्विज्ञेयो न मृत्युः स्याज्ज्वरं विना ७

शृणु भेषजरोगज्ञ द्वितीयं रोगसङ्करम्
मन्दज्वरो भवेन्नृणामतीसारस्ततो ज्वरः ८

तेन चापि भवेद्धिक्का शोषो मोहो भ्रमोऽरुचिः
एतेषां शोफतो मृत्युस्तृतीयः कथ्यतेऽधुना ९

दिवास्वप्नादिदोषैर्वा प्रतिश्यायश्च जायते

तस्मात्कासः समुद्दिष्टः कासात्पीनस एव च १०

तस्मात्क्षयः क्षयाच्छोफो शोफेनाऽपि मृतिं व्रजेत्
ज्वरः क्षयश्च यक्ष्मा च कुष्ठगुल्मार्शसंग्रहाः ११

शर्करा मेह उन्माद अपस्मारो भगन्दरः
एते महाघोरतरा याप्यं कुर्वन्ति मानवम् १२

वातपित्तादयो दोषास्तथा श्लैष्मसमुद्भवाः
जायन्ते व्याधयः सर्वे तेषां वक्ष्याम्युपक्रमम् १३

वातः पचति सप्ताहात्त्रिरात्रात्पित्तमेव च
श्लेष्मा सार्द्धदिनेनापि विपचेद्भिषजां वर १४

द्वन्द्वजं वातपित्तञ्च नवरात्रेण पच्यते
श्लेष्मवातौ दशाहेन पञ्चाहात्पित्तश्लैष्मिकम् १५

शमनाय च द्वन्द्वानां तुर्याहात्पाचनं तथा
त्रिदोषस्य च घोरस्य पाचनं द्वादशे दिने १६

सन्निपातश्च पचति चतुर्दशदिनैरपि
ज्ञात्वा दोषबलं पक्वं तस्माद्देयन्तु पाचनम् १७

युक्तं निदानलक्षैस्तु तस्मात्संशमनक्रिया
सप्ताहेनापि पच्यन्ते सप्तधातुगता मलाः १८

चिरादपि हि पच्यन्ते सन्निपातज्वरे मलाः
विरामश्चाप्यतः प्रोक्तो ज्वरः प्रायोऽष्टमेऽहनि
न भवेत्सप्तमेऽहनि विरामज्वरकारणम् १९

विचार्य भेषजं दद्यादजीर्णे मतिमान्भिषक्

मन्दो हि सुतरामग्निर्भेषजं न विपाचयेत्  २०

सर्वेषु दोषशामेषु पाचनं लङ्घनं स्मृतम्
लङ्घितं मध्यलङ्घितं स्यादतिलङ्घितमेव च  २१

लक्षणं वक्ष्यते चैषां मनुष्याणां शृणुष्व हि  २२

गतक्लमोऽरुचिम्लानिरिन्द्रियाणां प्रसन्नता
लङ्घने दोषपाकस्तु शुद्धलङ्घितलक्षणम्  २३

किञ्चित्क्लमोऽरुचिग्लानिरिन्द्रियाणां विवर्णता
बहुतृष्णाल्पक्षुच्चापि श्रमश्चैव भिषग्वर  २४

किञ्चित्संस्निग्धता गात्रे रुचिबाधातिबन्धता
मध्यपाकी च दोषः स्यान्मध्यलङ्घितलक्षणम्  २५

वैकल्यं जायते तन्द्रा विड्भेदश्च विनिद्रता
वेपथुश्च शिरोऽर्त्तिश्च क्षुत्क्षामं शूलमेव च  २६

श्यामास्यं प्लावनं नेत्रे मूर्च्छामोहश्रमातुरम्
अतिलङ्घितमेतैस्तु लक्षणं संविभावयेत्  २७

वेलाज्वरे भूतज्वरे तथा पित्तज्वरेऽपि च
आयासे क्रोधजे वापि भयकामज्वरेऽपि च  २८

एतेषां लङ्घनं नैव कारयेद्भिषगुत्तमः  २९

बालं वृद्धं कृशं क्षीणमतीसारव्रणातुरम्
गुर्विणीं सुकुमारञ्च लङ्घयेन्न कदाचन  ३०

सामे मन्दज्वरे तीव्रे रुचिविड्बन्धकेऽपि च
अजीर्णे तु प्रशस्तञ्च लङ्घनं मात्रयान्वितम्  ३१

स्निग्धत्वञ्चातिगात्राणामुदरं गर्जयेद्भृशम्
शिरोऽर्त्तिर्जठराध्मानः प्रतप्तं कण्ठकूजनम् ३२

अरुचिः पीतता मूत्रे निद्रातन्द्रातुरं नरम्
आमज्वरञ्च विज्ञाय लङ्घयेद्भिषगुत्तमः ३३

अनशनवमनविरेचनरक्तस्त्रुतितप्ततोयपानैः
स्वेदनकर्मसहितैः षड्विधं लङ्घनं गदितम् ३४

क्षुत्क्षामं श्रमशैथिल्यं भ्रमवेगज्वरातुरम्
अन्तर्दाहं रक्तमूत्रं विरामज्वरलक्षणम् ३५

वातिको लङ्घनैः षड्भिः पैत्तिकस्तु दिनत्रयम्
सप्तभिः पचते श्लेष्मा दृष्ट्वा लङ्घनमाचरेत् ३६

त्रिदोषो दशरात्राणि पचते लङ्घनैस्तु सः
दिने पञ्चदशे प्राप्ते पचते सान्निपातिकः ३७

मुञ्चेद्वा आतुरं हन्ति भवेद्वा विषमज्वरः
बाल्ये रक्तमया दोषाः कफपित्तादनन्तरम् ३८

षोडशे तु समे प्राप्ते त्रिदोषप्रभवा गदाः
पञ्चविंशतिमे प्राप्ते ज्वरो वै सान्निपातिकः ३९

वातपित्तकफैरेव रसरक्तसमुच्चयात्
जायते यो ज्वरः सम्यक् पक्के क्वाथं तु दापयेत् ४०

क्वाथः सप्तविधः प्रोक्तः पाचनः शमनस्तथा
दीपनः क्लेदनः शोषी सन्तर्पणो विशेषतः ४१

पाचनञ्च नरे देयं निशासु प्रविजानता

पूर्वाह्णे शमनो देयोऽपराह्णे दीपनः स्मृतः ४२

सन्तर्पणो भेदनश्च कल्ये पानाय दापयेत्
शोषणोपि प्रभाते च क्वाथः पाने प्रकीर्त्तितः ४३

रात्रौ यः प्रथमो यामो भूतवेला प्रकीर्त्तिता
द्वितीयं निशि इत्याहुर्निशीथञ्च ततः परम् ४४

गणरात्रं ततो ज्ञेयं कालमप्राप्तराशिनम्
पूर्वापराह्णमध्याह्नाः परार्द्धदिनशेषकाः ४५

पूर्वे दिनावसाने च भेषजानामुपक्रमः ४६

पाचनो दीपनीयश्च शोधनः शमनस्तथा
तर्पणः क्लेदनः शोषी क्वाथः सप्तविधः स्मृतः ४७

पाचनोऽर्द्धावशेषी स्याच्छोधनो द्वादशांशकः
क्लेदनश्चतुरङ्गश्च शमनोऽष्टावशेषितः ४८

दीपनीयो दशांशस्तु तर्पणश्च समांशकः
विशोषी षोडशांशश्च क्वाथभेदाः प्रकीर्त्तिताः ४९

पाचनः पचते दोषान्दीपनो दीप्यतेऽनलम्
शोधनो मलशोधी स्याच्छमनः शमते गदान् ५०

तर्पणस्तर्पते धातून्क्लेदी हृत्क्लेदकारकः
विशोषी शोषमाधत्ते तस्मात्क्वाथं परीक्षयेत् ५१

क्लेदी विशोषी विज्ञाय वामनं कारयेन्नरम्
न लङ्घयेत्क्वाथकृतं नान्तराणि च चालयेत् ५२

न शोषयेत्पुनः स्थाप्यो नाशुचौ च चकासते

स च क्वाथो न शस्तः स्याद्रोगसङ्करकारणम्  ५३

न शोषयेत्पुनः क्वाथं न च भूमिगतं पुनः
दोषसंशमनेनैते प्रशस्ता गदकर्मणि  ५४

विदीर्यते पततेऽपि स्फुटते क्वाथतो जनः
एतेऽनिष्टकराः क्वाथा न दोषशमनाय च  ५५

एतैर्हिलक्षणैर्हीनं क्वाथं दृष्ट्वा परीक्षयेत्  ५६

कृष्णं नीलं घनं रक्तं पिच्छिलं शिथिलञ्च यत्
दग्धं कुणपगन्धञ्च विस्रगन्धं विवर्जयेत्  ५७

एतैरसाध्यं जानीयाद्रोगिणं नात्र संशयः
द्रव्यगुणानुवर्णेन द्रव्यगन्धं विनिर्दिशेत्  ५८

तद्वद्विशुद्धं सच्छायं कषायममृतोपमम्
वातज्वरे लङ्घनान्ते दत्त्वा चान्नं तथोपरि
निशासु पाचनं देयं ज्ञात्वा दोषबलाबलम्  ५९

त्रिरात्रे पैत्तिके देयं श्लैष्मिके प्रथमेऽहनि
अविज्ञाते च दोषे च पाचनं न प्रदापयेत्  ६०

सप्तरात्राद्धि मर्यादा ज्वरेणैवोपलक्ष्यते
तस्मान्नवज्वरे पीतं दोषकृन्न च दोषहृत्  ६१

तस्मादादौ प्रदेयन्तु पाचनञ्च दिनत्रयम्
शमनीयं प्रदेयन्तु पञ्चरात्रं ततः परम्  ६२

शोधनं दीपनीयन्तु एकरात्रं प्रदापयेत्  ६३

क्वाथपाने क्लमो मूर्च्छा वैक्लव्यञ्च प्रदृश्यते

वमनञ्च यदा प्रोक्तं शमनं पथ्यकेऽपि वा  ६४

सदा पथ्यं प्रयोक्तव्यं नापथ्येन स सिध्यति
औषधेन विना पथ्यैः सिध्यते भिषगुत्तमैः  ६५

विना पथ्यं न साध्यः स्यादौषधानां शतैरपि
ज्वरितो हितमश्नीयाद्यद्यप्यस्यारुचिर्भवेत्  ६६

अन्नकालेष्वभुञ्जानो हीयते म्रियतेऽपि वा
स क्षीणः कृच्छ्रतां याति यात्यसाध्यत्वमेव च  ६७

तस्माद्रक्षेद्बलं पुंसां बलशान्तिर्हिजीवितम्
लङ्घिते चैव दोषे च यवागूपानमाचरेत्  ६८

शालिषष्टिकमुद्गञ्च यूषं शस्तं वदन्ति हि  ६९

पञ्चकोलकसंसिद्धा यवागूर्मध्यलङ्घिते
भवेत्प्रशस्ता सततं तस्य सन्तर्पणं हितम्  ७०

आजं दुग्धं गुडोपेतं पानाय ज्वरशान्तये
तेन क्लमविनाशः स्यात्सुखमाशु प्रपद्यते  ७१

उदीच्यां वा पूर्वस्यां वाऽभिमुखञ्चोपवेशयेत्
पाययेत्क्वाथपानञ्च कृत्वा ब्राह्मणवाचनम्  ७२

पानपात्रमधः कृत्वा शयीता ज्ञानमेव च
पीत्वा चैव तृषार्त्तोऽपि न जलं पाययेत्क्षणम्  ७३

गतक्लमं नरं दृष्ट्वा तदा सम्पद्यते सुखम्  ७४

इति आत्रेयभाषिते हारीतोत्तरे तृतीयस्थाने भेषजपरिज्ञानविधिर्नाम
प्रथमोऽध्यायः  १

## द्वितीयोऽध्यायः

आत्रेय उवाच
अनभिज्ञश्चिकित्सायां शास्त्राणां पठनेन किम्
यथा पलालं बीजैस्तु रहितं निष्प्रयोजकम् १

वरमाशीविषविषं क्वथितं ताम्रमेव च
पीतमत्यग्निसन्तप्ता भक्षिता वाप्ययोगुडाः २

न तु श्रुतवतां वेशं बिभ्रतां शरणागतात्
ग्रहीतुमन्नपानं वा वित्तं वा रोगपीडितात् ३

तदेव युक्तं भैषज्यं यदारोग्याय जायते
स चैव भिषजां श्रेष्ठो रोगेभ्यो यो विमोक्षयेत् ४

तस्मात्सर्वप्रयत्नेन रोगवारणहेतुना
युक्ता निदानलक्षैस्तु संहितोपायसंयुता ५

पठितव्या समासेन संहिताज्ञानहेतवे
ज्ञात्वा रोगप्रतीकारं ततः कुर्यात्प्रतिक्रियाम् ६

अविज्ञाय रुजं सम्यङ्मोहादारभते क्रियाः
विधानज्ञोऽथ शास्त्रज्ञो न तत्सिद्धिः प्रजायते ७

निदानं रोगविज्ञानं भेषजानां गुणागुणम्
विज्ञाय कुरुते यस्तु तस्य सिद्धिर्न दूरतः ८

आदावेव रुजां ज्ञानं साध्यासाध्यं विचक्षणः
याप्यं सर्वरुजाञ्चैव ततः कुर्यात्प्रतिक्रियाम् ९

देशं कालं वयो वह्निसात्म्यं प्रकृतिभेषजम्
एवं विज्ञाय सद्वैद्यस्ततः कुर्यात्प्रतिक्रियाम् १०

नास्ति रोगो विना दोषैर्दोषा वातादयः स्मृताः
ज्वरादयः स्मृता रोगास्तान्सम्यक्परिलक्षयेत् ११

आप्तानाञ्चोपदेशेन प्रत्यक्षीकरणेन च
आतुरादिदृशा स्पर्शाच्छीतादिप्रश्नतः परम् १२

दर्शनस्पर्शनप्रश्नै रोगज्ञानां त्रिधामतम्
मुखाक्षिदर्शनात्स्पर्शाच्छीतादिप्रश्नतः परम् १३

कृच्छ्रयाप्यसुखोपायो द्विविधः साध्य उच्यते
असाध्यो द्विविधो ज्ञेयः कृच्छ्रः कृच्छ्रतमोऽपरः १४

याप्याः केचित्प्रकृत्यैव याप्याः साध्या उपेक्षया
स्वभावाद्व्याधयः साध्याः केचित्साध्या उपेक्षिताः १५

साध्या याप्यत्वमायान्ति याप्याश्चासाध्यतां तथा
घ्नन्ति प्राणांश्च साध्यास्तु नराणामक्रियावताम् १६

व्याधेरुपरि यो व्याधिः सोपद्रव उदाहृतः
सोपद्रवा न जीवन्ति जीवन्ति निरुपद्रवाः १७

ज्ञात्वाल्पकोऽपि भिषजाः परिचिन्तनीयो
नोपेक्षणीय इति रोगगणो ह्यसाध्यः ।
स्वल्पोऽप्यरिर्गरल वह्निसमानरूप
आप्तोबलं न शमतामुपयाति काले १८

शत्रुः स्थानबलं प्राप्य विक्रमं कुरुते बली
तथा धात्वन्तरं प्राप्य विक्रमं कुरुते गदः १९

बहुविधपरिकार्येणापि नीतं शमं यत्
कृशमपि हि न धार्यं रोगमूलं विधिज्ञ ।

कथमपि बहुपथ्यैर्व्यावृतो वा बलिष्ठो
न शमयति हि रोगं बाल्यमात्रेण सम्यक्  २०

यथा स्वल्पं विषं तीव्रं यथा स्वल्पो भुजङ्गमः
यथा स्वल्पतरश्चाग्निस्तथा सूक्ष्मोऽपि रुग्रिपुः  २१

यावत्स्थानं समाश्रित्य विकारं कुरुते गदः
तावत्तस्य प्रतीकारः स्थानत्यागाद्बलीयसः  २२

कर्मजा व्याधयः केचिद्दोषजाः सन्ति चापरे
सहजाः कथिताश्चान्ये व्याधयस्त्रिविधा मताः  २३

बहुभिरुपचारैस्तु ये न यान्ति शमं ततः
ते कर्मजाः समुद्दिष्टा व्याधयो दारुणाः पुनः  २४

दोषजा वातपित्ताद्याः सहजाः क्षुत्तृषादयः  २५

तस्माद्वक्ष्यामि चादौ ज्वरमतुलगदं वाजिनां कुञ्जराणां मानुष्याणां पशूनां
मृगमहिषखरोष्ट्रादिवानस्पतीनाम्  ।
वल्लीनामोषधीनां क्षितिधरफणिनां पत्रिणां मूषिकाणामेष प्राणापहारी ज्वर
इति गदितो दुर्निवारो हि लोके  २६

असाध्योऽयं ज्वरो व्याधिर्गोमहिष्यश्वकुञ्जरे
किञ्चित्कृच्छ्रतमो नृणामन्येषां जीवघातकः  २७

यथा मृगाणां मृगयुर्बलिष्ठस्तथा गदानां प्रबलो ज्वरोऽयम्
नान्योऽपि शक्तो मनुजं विहाय सोढुं भुवि प्राणभृतः सुराद्याः  २८

कर्मणा लभते यस्माद्देवत्वं मानुषो दिवि
ततश्चैवच्च्युतः स्वर्गान्मानुष्यमपि वर्त्तते  २९

तस्मात्स देवभावात्तु सहते मानुषो ज्वरम्
शेषाः सर्वे विपद्यन्ते पशुवर्गा ज्वरार्दिताः ३०

रोगाणां रोगराजोऽयं यथा मृगपतिर्मृगे
दाहात्मसु यथा वह्निस्तथा रोगो ज्वरोऽधिकः
रुद्रक्रोधाग्निसम्भूतः सर्वभूतप्रतापनः ३१

पातकः स तु नागानामभितापस्तु वाजिनाम्
गवामीश्वरसंज्ञस्तु मानवानां ज्वरो मतः ३२

दारिद्रो महिषीणान्तु मृगरोगो मृगेषु च
अजावीनां प्रलापाख्यः करभेष्वलसो भवेत् ३३

शुनोऽलर्कः समाख्यातो मत्स्येष्विन्द्रमतो मतः
पक्षिणामभिघातस्तु व्यालेष्वैक्षितसंज्ञितः ३४

जलस्य नीलिका प्रायो भूमिषूषरनामतः
वृक्षस्य कोटराक्षस्तु ज्वरः सर्वत्र दृश्यते ३५

त्रिपाद्भस्मप्रहरणस्त्रिशिराः सुमहोदरः
वैयाघ्रचर्मवसनः कपिलोज्ज्वलविग्रहः ३६

पिङ्गेक्षणो ह्रस्वजङ्घो विमत्स्यो बलवानयम्
पुरुषो लोकनाशाय चासौ ज्वर इतिस्मृतः ३७

दग्धेन्धनो यथा वह्निर्धातून्हत्वा यथा विषम्
कृतकृत्यो व्रजेच्छान्तिं देहं हत्वा तथा ज्वरः ३८

तस्मात्तस्य समुत्पत्तिं वक्ष्यामि शृणु पुत्रक
चतुर्विधो महाघोरो जातो येन तु चाष्टधा ३९

दक्षादूर्ध्वरप्रशमनः कुपितो हि महेश्वरः
श्वासं मुमोच दयिताविधुरश्च तीव्रं तेन ज्वरोऽष्टविधसम्भवतोऽष्टधा स्यात्
४०

वातादिपित्तकफशोणित सन्निधानात्स्वेच्छान्नपाननिरतादृतुवैपरीत्यात्
दोषा मलाशयगता जठराग्निबाह्याः सम्प्रेरयन्ति रुधिरा श्रितवह्निपातम् ४१

तेषां ततो हि दधते ज्वरनाम सिद्धं-
व्यायामक्रोधभुक्त्यादिजननाच्छीतसम्भवत्वात् ४२

विरुद्धान्न विशेषेण पाननिर्झरवारिणा
कूपोदकेन सन्तुष्टस्तिग्मतीव्रांशुरश्मिभिः ४३

गन्धवातेन दोषाणामभिघाताभिशापतः
ज्वरोनाम महाघोरो जायते मनुजे भृशम् ४४

श्रमो जडत्वं नयनप्लवः स्याद्रोमोद्गमो घुर्घुरकश्च जृम्भा
वैवर्णता द्वेषसशोषतास्ये ज्वरस्य च व्यक्तकलक्षणानि ४५

समीरणे च वै जृम्भा कफाद्दैन्यं निषीदति
पित्तान्नयनसन्तापः सर्वं वै सान्निपातिके
तस्माद्वक्ष्ये प्रतीकारं येन सम्पद्यते सुखम् ४६

वचा यवानी धनिका सविश्वा पिबेत्कषायं निशि सोष्णमेवम्
स वातिके वातरुजे ज्वराणां सम्पाचके स्यान्मनुजे सुखाय ४७

निशा सनिम्बा मृतवल्लिका च धान्यं च विश्वा सगुडः कषायः
निशासु च क्षीरसकोलमिश्रं पानं सपित्तज्वरपाचनाय ४८

वचा यवानी त्रिफला सविश्वा क्वाथो निशायां कफजे ज्वरे वा
सपाचनं स्यान्मनुजस्य दोषे शूले प्रतिश्यायकपीनसेषु ४९

शठीवचानागरकाफलानां वत्सादनीधन्वयवासकानाम्
क्वाथोहितः सर्वभवे ज्वरे च सम्पाचनं स्यान्मनुजत्रिदोषे ५०

रात्रौ सुखोष्णतोयेन प्रचुरेण च धीमताम्
अङ्गसम्मर्दनं पथ्यं निद्राव्यायामवर्जितम् ५१

वैपथुर्विषमवेगशोषणं कण्ठतालुवदने विरस्यता
रूक्षता वपुषि बन्धकुक्षयोर्जृम्भणं शिरसि रुग्विनिद्रता ५२

कृष्णताकररुहां प्रलापको गात्रभङ्गबलवान् बिभत्स्यति
भीतवत्स्वपिति जाग्रतो नरो लक्षणैर्भवति वातकृज्ज्वरः ५३

नागरं सुरतरुश्च धान्यकं कुण्डली बृहतिका युगन्निशम्
सप्तमे निशि प्रशस्यते ज्वरे चाष्टमांशगतको हि अष्टवान् ५४

वीर्याधिकं भवति भेषजमन्नहीनं हन्यात्तदामयमसंशयमाशु चैव तद्बाल-
वृद्धयुवती मृदुभिश्च पीतं ग्लानिं परां नयति चाशु बलक्षयञ्च ५५

इन्द्रियाणां लघुत्वञ्च नेत्रास्यस्य प्रसादता
सोद्गारमुष्णता कोष्ठे जीर्णभेषजलक्षणम् ५६

क्लमहृल्लाससदनं शिरोरुग्भ्रंशमेव च
उत्क्लेदो जायते यस्य विद्यादुत्क्राममौषधम् ५७

दाहाङ्गसदनं मूर्च्छा शिरोरुक्क्लमदीनता
भ्रमो रतिविशेषेण सविशेषौषधाकृतिः ५८

तस्मादौषधशेषे तु न दोषशमनं क्वचित्
कोपन्त्यनेकधा दोषा न देयं पाचनं विना ५९

शीघ्रं विपाकमुपयाति बलं न हन्यादन्नावृतं न च मुहुर्वदनान्निरेति

प्राग्भुक्तसेवितमहौषधमेतदेव दद्याच्च वृद्धशिशुभीरुवराङ्गनाभ्यः ६०

बिल्वाग्निमन्थशुकनासकपाटलीनां कुम्भारिकाप्रयुतकं क्वथितं कषायम्
दन्तान्विशोधयति वारयते समीरं नाशं करोति मरुतज्वरमाशु पुंसाम् ६१

किरातमुस्तमृतवल्लिक्रणासवित्र्यो गोकरटको बृहतियुग्ममुदीच्यतिक्ताः ।
स्याच्छालिपर्णिकलशीक्वथितः समन्तात्क्वाथः समीरण भवं ज्वरमाशु
हन्ति ६२

गुडूची शतपुष्पा च प्लक्षी रास्ना पुनर्नवा
त्रायमाणकक्वाथश्च गुडैर्वातज्वरापहः ६३

मूर्च्छा दाहो भ्रममदतृषावेगतीक्ष्णोऽतिसारस्तन्द्रालस्यं प्रलयन वमीपाकता-
पश्च वक्त्रे । स्वेदः श्वासो भवति कटुकं विह्वलत्वं क्षुधा वा एतैर्लिङ्गैर्भव-
ति मनुजे पैत्तिको वै ज्वरस्तु ६४

रोध्रोत्पलामृतलताकमलं सिताढ्यं तत्सारिवासहितमेव हि पाचनेषु ।
निष्क्वाथ्य क्वाथमति चाशु निहन्ति पित्तं पित्तज्वरप्रशमनं प्रकरोति पुंसाम्
६५

क्वथितं तण्डुलपयसा शक्राह्वं कटुरोहिणीसहितम्
क्वाथं यष्टीमधुना विनाशनं पित्तज्ज्वराणान्तु ६६

दुरालभावासकपर्पटानां प्रियंगुनिम्बकटुरोहिणीनाम्
किराततिक्तं क्वथितं कषायं सशर्कराढ्यं कथितञ्च पाचनम् ६७

सदाहपित्तज्वरंमाशु हन्ति तृष्णाभ्रमं शोषविकारयुक्तम् ६८

एकोऽपि वै पर्पटको वरिष्ठः पित्तज्वराणां शमनाय योग्यः
तस्मात्पुनर्नागरवालकाढ्यः सिंहो यथा कङ्कटकप्रवृत्तः ६९

नागरोशीरमुस्ता च चन्दनं कटुरोहिणी
धान्यकानां तु क्वाथश्च पित्तज्वरविनाशनः ७०

अमृतं पर्पटो धात्री क्वाथः पित्तज्वरं हरेत् ७१

द्राक्षापर्पटकतिक्तापथ्यारग्वधमुस्तकैः
क्वाथस्तृषाभ्रमदाहयुक्तपित्तज्वरापहः ७२

विदारिकारोध्रदधित्थकानां स्यान्मातुलुङ्गस्य च दाडिमानाम्
यथानुलाभेन च तालुलेपो निहन्ति दाहं तृषामूर्च्छनञ्च ७३

उत्तानस्य प्रसुप्तस्य कांस्ये वा ताम्रभाजने
नाभौ निधाय धारां नु शीतान्दाहं निवारयेत् ७४

रम्यारामाकुचभरनतालिङ्गनं चेष्टसङ्गाद्द्राक्षापानं निगदितमथो शीतलं सेवनं स्यात् । शुभ्राम्भोजञ्च मलयजलासिक्तसंशीतवासो मुक्ताहारो विशदतुहिनं कौमुदीयामुखाय ७५

एभिर्हन्ति द्रुततरनिभं मानुषाणां तु पित्तं दाहं शोषं क्लममपि तथा तृड्भ्रमं मूर्च्छनाञ्च । एतैर्योगैर्भवति नितरां पित्तदाहस्य शान्तिर्योग्या चैवं भवति सततन्तत्क्रियाश्रीमताञ्च ७६

यदि जिह्वागलतालुशोषश्चेन्मनुजस्य च
केसरं मातुलुङ्गस्य मधुसैन्धवसंयुतम्
पेष्यमाणं तालुलेपे सद्यः पित्तज्वरापहम् ७७

स्तैमित्यं मधुरास्यता च जडता तन्द्रा भृशञ्च तथा गात्राणां गुरुतारुचिर्विस्म-

ता रोमोद्गमः शीतता
प्रस्वेदाः श्रुतिरोधनञ्च कुरुते नेत्रे च पाण्डुच्छवी विष्टब्ध मलवृत्तिकासवमनं श्लेष्मज्वरे ते विदुः ७८

पिप्पलादिककल्कं तु कफजे पाचनं हितम् ७९

तद्वद्व्याघ्री च सिंही च रोध्रं कुष्ठपटोलकम्
ज्वरे कफात्मजे चैतत्पाचनं स्यात्तदुत्तमम् ८०

वासा गुडूची त्रिफला पटोली शठी च तिक्ता मधुनीकषायम्
श्लेष्मप्रभूतेषु रुजेषु सम्यग् ज्वरं निहन्यात्कफजञ्च शीघ्रम् ८१

आमलक्यभया कृष्णा षड्ग्रन्था त्रित्रिकन्तथा
मलभेदी कफान्तको ज्वरनाशनदीपनः ८२

पिप्पली शृङ्गवेरञ्च षड्ग्रन्था वत्सकं फलम्
क्वाथो मधुप्रगाढः स्याच्छ्लेष्मज्वरविनाशनः ८३

क्षौद्रेण पिप्पलीचूर्णं लिह्येच्छ्लेष्मज्वरापहम्
प्लीहानाहविषं हन्ति कासश्वासाममर्दनम् ८४

तृष्णा मूर्च्छा वमिरथ कटुता चानने रूक्षता स्यादन्तर्दाहो वपुषि नयने
रक्तता कण्ठशोषः ।
निद्रानाशः श्वसनशिरसो रुक्प्रभेदोऽङ्गभङ्गोरोमोद्धर्षस्तमकमिति चेद्वातपित्त-
ज्वरः स्यात् ८५

संसृष्टदोषैर्विहितञ्च सम्यग्विपाचनं पित्तमरुज्ज्वरे च
फलत्रिकं शाल्मलिसम्प्रयुक्तं रास्नाकिरातस्य पिबेत्कषायम् ८६

द्विपञ्चमूली सह नागरेण गुडूचिभूनिम्बघनैः समेता
कल्कः प्रशस्तः सगुडो मरुत्सु स पित्तवातज्वरनाशहेतुः ८७

किराततिक्तामलकीशठीनां द्राक्षोषणानागरकामृतानाम्
क्वाथः सुशीतो गुडसंयुतः स्यात्स पित्तवातज्वरनाशहेतुः ८८

अमृतमुस्तकवासापर्पटविश्वाजलेन क्वाथः
पानं पित्तमरुत्सु ज्वरं निहन्याच्च भद्रमुञ्जः  ८९

निद्रागौरवकात्ससन्धिशिररुक्चार्त्तिस्तथा पर्वणां भेदो मध्यमवेगमत्र नयने वातान्विते श्लेष्मणि ।
सन्तापः श्वसनं रुचिः श्रुतिपथे कण्ठे च शुष्कावृतिस्तन्द्रामोहमरोचकभ्रम-मथ श्लेष्मज्वरे पित्तले  ९०

नागरं भद्रमुस्ता वा गुडूच्यामलकाह्वयम्
पाठामृणालोदीच्याश्च क्वाथः पित्तज्वरे कफे  ९१

पाचनो दीपनीयः स्याद्रक्तशोषनिवारणः  ९२

द्राक्षामृतावासकरिष्टकाश्च भूनिम्बतिक्तेन्द्रयवाः पटोलम्
मुस्तासभार्गा क्वथितः कषायः पित्तकफस्य ज्वरनाशनाय  ९३

गुडूचिका निम्बदलानि शुण्ठी मुस्तञ्च कुस्तुम्बुरुचन्दनानि
क्वाथं विदध्यात्कफपित्तवातज्वरं निहन्याच्च गुडूचिकाद्यः  ९४

एष सर्वज्वरान्हन्ति हृल्लासाद्यानरोचकान्
प्रतिश्यायपिपासाघ्नः शोषदाहनिवारणः  ९५

गुडूचीनिम्बचक्रवासकञ्च शठी किरातं मगधाष्टहल्यौ
दार्वीपटोलं क्वथितं कषायं पिबेन्नरः पित्तकफे ज्वरे च  ९६

पटोली चन्दनं तिक्ता मूर्वा पाठामृतागणः
पित्तश्लेष्मज्वरच्छर्दिदाहकण्डूनिवारणः  ९७

पटोलवासापिचुमन्दकस्य मूलानि यष्टीमधुकं घना च
कषायमेतत्प्रतिसाधितन्तु ज्वरे कफे पित्तभवे प्रशस्तः  ९८

सन्दीपनो पित्तकफात्मके च तथैव पित्तासृजसम्भवे च
ज्वरे मलानां प्रतिभेदनः स्यात्पटोलधान्याश्रितकः प्रशस्तः  ९९

शीतं वेपथुपर्वभङ्गवमथुर्गात्रे जडत्वं रुजां मन्दोष्मारुचिबन्धनं परुषता कासस्तमः शूलवान्  ।
तन्द्रा कूजनमात्मलौल्यमथवास्तैमित्यजृम्भारुचिः प्रस्वेदोमलमूत्ररोधसहितः स्याच्छ्लेष्मवातज्वरः  १००

आरग्वधस्तिक्तकरोहिणी च हरीतकी पिप्पलिमूलमुस्ता
निष्क्वाथ्य कल्कः कफवातयुक्ते ज्वरे सशूले हितपाचनोऽयम्  १०१

क्षुद्रा गुडूची सह नागरेण वासाजलं पर्पटकञ्च पथ्याः
मुस्ता च दुःस्पर्शयुतः कषायः पानो हितो वातकफज्वरस्य  १०२

पर्पटनागाख्यवचातन्तुककट्फलैलाभयाविश्वभूतिके
क्वाथो हिंगुमधुयुतः कफवाते सहिक्कारोगे सगलग्रहे च  १०३

द्विपञ्चमूलकः क्वाथः कणाचूर्णेन भावितः
देयो वातकफे शूले ज्वरे श्वासे च पीनसे  १०४

तन्द्रालस्यं मुखमधुरता ष्ठीवनं कण्ठशोषो निद्रानाशः श्वसनविकलो मूर्च्छ-ना शोचना च  ।
जिह्वाजाड्यं परुषमथ वा पृष्ठशीर्षे व्यथा स्यादन्तर्दाहो भवति यदि वा विद्धि दोषं त्रिदोषम्  १०५

दृष्ट्वा त्रिदोषजं घोरं ज्वरं प्राणापहारकम्
तस्मादादौ कफस्यास्य शोषणं परिकीर्त्तितम्  १०६

न कुर्यात्पित्तशमनं यदीच्छेदात्मनो यशः
कफवातैर्बलवतः सद्यो हन्ति रुजातुरम्  १०७

लङ्घनं दमनं वापि ष्ठीवनं स्यात्त्रिदोषजे
त्रिरात्रं पञ्चरात्रं वा सप्तरात्रमथापि वा १०८

लङ्घनञ्च समुद्दिष्टं ज्ञात्वा दोषबलाबलम्
कफं विशोषितं ज्ञात्वा ततो वातनिवारणम् १०९

पित्तसंशमनं कार्यं ज्ञात्वा पित्तस्य कोपनम्
शोषणीयौ वातकफौ न तु पित्तं विनाशयेत् ११०

तृष्णा च शूलशोषः श्वसनमथ निशाजागरो वासरैस्तु
तन्द्रा मोहश्च शोषो भवति च वदने घ्राणजिह्वाधराणाम्
पाकं निष्ठीवते यः कृशतनुश्च भवेन्मण्डलानाञ्च देहे
सम्भूतिः श्यावनेत्राध-रवदनमदस्वेद आध्मानशोषः १११

क्षुन्नाशो वा भ्रमणमपि तथा शिरसो लोडनं वा
शिरोऽर्त्तिः स्रोतोरोधो वमिर्वा गलकघुरघुराशूलकैर्वा वृतस्तु ।
एतैर्लिङ्गैः प्रयुक्तः प्रभवति च नृणां सन्निपातेतिसंज्ञा
रोगाणामाशुकारी ज्वर अतिदुःखदो वाजिनां वा द्विपानाम् ११२

सन्निपातज्वरे पूर्वं कुर्याद्वातकफापहम्
पश्चाच्छ्लेष्मणि संक्षीणे निरामे पित्तमारुतौ ११३

सन्निपातज्वरे यत्नं कृत्वा तन्द्रां जयेत्पराम्
उपद्रवः कष्टतमो ज्वराणाञ्च विशेषतः ११४

पथ्ये कारयते यस्तु रोगिणां कफपूरितम्
स एवास्य शत्रुः स्यान्न पथ्यं न च भेषजम् ११५

शठी द्विपञ्चमूलकं दुरालभा च कोटजम्
पटोलं पौष्करं वाथ युक्ता भार्गवी पिप्पली ११६

निहन्ति सान्निपातिकज्वराग्निमाद्यन्दशाङ्गः  ११७

भूनिम्ब दारुदशमूलमहौषधाब्दतिक्तेन्द्रबीज धनिकभद्रकराटकणाकषायः
तन्द्राप्रलापभ्रमतृषारुचिदाहमोहश्वासाग्निमान्द्ययुक्तमथज्वरमाशु हन्ति  ११८

शराठीघनागजकणासुरदारुधान्यातिक्ताकलिङ्गदशमूलसमोऽपि कल्कः
श्रेष्ठस्त्रिदोषजनितज्वरनाशनाय श्वासभ्रमारुचिविबन्धहृदामयघ्नः  ११९

मुस्तोशीरनिशाविशालमधुकं पाठा बला रोहिणी
नीली धन्वयवास कटृवरशठी शुराठी समङ्गा विवृत्  ।
यष्टीपिप्पलिमूलपर्पटफला पिप्पल्यकं दारु च
श्यामाहेमगुडूचिकासमपयः क्वाथो ज्वरान्तः स्मृतः  १२०

द्वे बृहत्यौ शठी शृङ्गी किरातं कटुरोहिणी
पटोलं पौष्करं भार्ङ्गी वत्सकञ्च दुरालभा  १२१

एतद्बृहत्यादिकपाचनं स्यात्कासादिकोपद्रवनाशनञ्च
शीघ्रं निहन्ति ज्वरसन्निपातं शूलार्त्तितन्द्राशमने प्रशस्तम्  १२२

शठी किरातं कटुका विशाला गुडूचिभृङ्गी बृहतीद्वयञ्च
महौषधं पौष्करधन्वयासरास्नासुराह्वा गजपिप्पली च  १२३

पीतन्तु निष्क्वाथ्य हितं नराणां शठ्यादिचातुर्दशकं प्रशस्तम्
जघान तन्द्राश्वसनं शिरोऽर्त्तिजाड्यं सशूलं ज्वरमाशु हन्ति  १२४

भूनिम्बसुरदारुनागरघनातिक्ताकलिङ्गानि च
तद्वद्धस्तिकणा द्विपञ्चकगणैर्युक्तः कषायो हितः  ।
पीतः सर्वरुजां विनाशनकरः स्यात्सन्निपातज्वरं
हन्ति श्वासविशोषवक्षसिरुजं तन्द्रां जघान द्रुतम्  १२५

रास्ना गुडूचिघनपर्पटकं पटोली भूनिम्बवत्सकशठीयुतनागराणाम्

तिक्तासुराह्वगजमागधिकायवासावासाबलागजबलाक्वथितः समांशः
१२६

क्वाथो निहन्ति मरुतप्रभवामयानां सश्वास कासजठरार्तिविषूचिकानाम्
श्रेष्ठो नृणां भुवि च पाचनसन्निपाते रोगेऽथवा कफसमीरणके प्रदेयः १२७

रास्नात्रिकण्टशतमौषधीनान्तथा च भार्ङ्गी सपुष्करघना सुरदारुधान्याः
क्वाथो हितः सकलमारुतजिज्ज्वरेषु स्यात्सन्निपातप्रभवेष्वतिदारुणेषु १२८

त्रिवृद्विशाला च तथा सुराह्वमारग्वधस्तिक्तकरोहिणी च
क्वाथो भवेद्भेदनको मलानां स्याद्वातशूले नयतो भयघ्नः १२९

वचा यवानी च महौषधञ्च शुष्कञ्च चूर्णं तनुलेपनाय
शस्तं वदन्ति ज्वरघर्मशान्तिं करोति नूनं परिमर्दनञ्च १३०

मागधी च सुरदारु तथा च विश्वकं तिक्ता च दीप्यकयुतं तनुलेपनाय
चूर्णं प्रशस्तमपि वारयते शरीरे स्वेदञ्च शीतलतनुर्भवेदाशु नूनम् १३१

मधूकसारं समहौषधेन वचोषणा सैन्धवसंयुता च
मूत्रेण वा चोष्ण जलेन पिष्टं प्रनष्टज्ञानप्रतिबोधनाय १३२

शोभाञ्जनकमूलस्य रसं समरिचान्वितम्
विसञ्ज्ञितानां नस्यं स्याद्बोधनं चाशु रोगिणाम् १३३

एकं बृहत्याः फलपिप्पलीकं शुण्ठीयुतं चूर्णमिदं प्रशस्तम्
प्रधामयेद्घ्राणपुटे तु संज्ञाचेष्टां करोति क्षवथुप्रबोधः १३४

शिरीषबीजं मरिचोपकुल्या मूत्रेण घृष्टं सह सैन्धवेन
नेत्राञ्जनं स्यान्नयने नराणां प्रनष्टसंज्ञां प्रकरोति बोधः १३५

त्रिकटु तथा च करञ्जबीजं त्रिफला सुरदारु सैन्धवम्

तुलसी वर्त्ति दयनाञ्जनकं तन्द्रा नाशं करोति नयनानाम्  १३६

केसरं मातुलुङ्गस्य शृङ्गवेरं ससैन्धवम्
त्रिकटुसंयुतं कृत्वा आकराठाद्धारयेन्मुखे  १३७

दन्तजिह्वामुखं तालुघर्षणं कारयेद्बुधः
कुर्यान्निष्ठीवनं सर्वं वारंवारं विधानतः  १३८

तेन कराठविशुद्धिः स्याच्छ्लेष्माणं चापकर्षति
जिह्वापटुत्वरुचिकृत्वासः श्वासश्च शाम्यति  १३९

त्रकटुचव्यकापथ्या चूर्णं सैन्धवसंयुतम्
तेन दन्तांस्तथा जिह्वां घर्षयेत्तालुकामलम्  १४०

निष्ठीवनं गलशुद्धिरुचिकृत्कफसूदनम्
हृल्लासो नाशमाप्नोति पटुत्वं कुरुते भृशम्  १४१

यदि वा शीतगात्रे च तदा स्वेदो विधीयते
स्वेदास्त्रयोदश ज्ञेयाः स्वेदवारणकारणाः  १४२

सङ्करः प्रस्तुतो नाडीपरिषेकोऽपगाहनः
आतङ्कोऽस्मयनः कर्षः कूटी भूकुम्भिरेव च  १४३

कूपो होलाक इत्येते स्वेदयन्ति त्रयोदशः  १४४

कालस्वेदं घटीस्वेदं वालुकास्वेदमेव च
कारयेद्धस्तपादाभ्यां तथा शिरसि चातुरे
एवं नो शान्तिर्यदि वा दहेल्लोहशलाकया  १४५

पादौ दग्धे न चेच्छैत्यं दहेद्वाङ्गुष्ठमूलके
तथा च मणिबन्धे च हृदि मूर्ध्नि तथापि वा  १४६

स्वेदो ललाटे हिमो वा नरस्य शीतार्दितस्यापि सपिच्छलस्य
कराठस्थितो यस्य न याति वच्चो नूनं समभ्येति गृहं हि मृत्योः १४७

सप्ताहे वा दशाहे वा द्वादशाहेऽथवा पुनः
त्रयोदशे पञ्चदशे प्रशमं याति हन्ति वा १४८

अथ पञ्चादशाहे वा हन्ति रच्चति मानवम्
सन्निपातो महाघोरो ज्वरः कालाग्निसन्निभः १४९

एषा त्रिदोषमर्यादा मोच्चाय च वधाय च
सन्निपातस्य दोषस्य नरस्यास्य भिषग्वर १५०

सन्निपातेऽन्तर्दाहे मनुजं यः शीतवारिणा सिञ्चेत्
आतुरः कथमपि जीवेद्वैद्यश्चासौ कथं पूज्यः १५१

यः सन्निपातजलधौ पतितं मनुष्यं वैद्यः समुद्धरति किन्न कृतं नु तेन ।
धर्मेण वाथ यशसा विनयेन युक्तः पूजां च कां भुवितले न लभेत्तु वैद्यः
१५२

वातपित्तकफैस्त्रिभिर्युक्तस्तथा त्रिदोषजः
स च रक्तेन संयुक्तो ज्वरः स्यात्सान्निपातिकः १५३

न रक्तेन विना विद्धि ज्वरं वै सान्निपातिकम्
क्वाथैः पाचनकैर्दोषाः प्रशमं यान्ति मानवे १५४

तस्मात्प्रशमिते दोषे रक्तं नैव विलीयते
तेनैव जायते शोफः कर्णमूले तु दारुणः १५५

तस्मात्तस्य प्रतीकार कुर्याद्रक्तविरेचनम्
जलौकालाबुभृङ्गैस्तु ततश्च लेपनं हितम् १५६

बीजपूरकमूलानि अग्निमन्थस्तथैव च
आलेपनमिदं चास्य कर्णमूलस्य नाशनम्  १५७

आगारधूपरजनीसुमहौषधेन सिद्धार्थसैन्धववचापयसा विमर्द्य
लेपोहितोरक्तविनाशकारी शोफव्रणस्य शमनो मनुजस्य कर्णे  १५८

यदा पाको भवेत्तस्य कार्या तत्र प्रतिक्रिया
धवार्जुनकदम्बत्वग्लेप्लनं व्रणरोहणम्  १५९

निम्बारग्वधमूलानां निशायुक्तं प्रलेपनम्
स्रावणं पूयगन्धानां रोहणं स्याद्व्रणेषु च  १६०

वर्जयेच्च दिवास्वप्नं योषित्सङ्गं बहूदकम्
शीताम्बु जागृतिं रात्रौ व्यायामं शोचनं तथा  १६१

माषांश्च यवगोधूमतिलपर्णीकमेव च
मसूरत्रिपुटांश्चैतांस्तैलञ्च दूरतस्त्यजेत्  १६२

मासमेकं व्यवायं च पन्नैकं चातिभोजनम्
वर्जयेत्कर्णमूलञ्च सुखं तेनोपपद्यते  १६३

षष्टिकान्नं पुराणं वा बाल्य सूपस्तथाढकी
कुलत्थामुद्गयूषं वा भोजने च प्रशस्यते  १६४

वार्त्ताकञ्च पलाण्डुं च कन्दशाकान्परित्यजेत्
एतेन सुखमाप्नोति शीघ्रं रोगाद्विमुच्यते  १६५

अन्ते पित्तं यदा तिष्ठेद्बाह्ये श्लेष्मसमीरणो
तदान्तर्दाहशोषः स्याद्बाह्ये सस्वेदशीतता  १६६

तस्यामृतापयः क्वाथं मधुपिप्पलिसंयुतम्

पाययेदाशु मुच्येत ज्वराद्वै सान्निपातिकात्  १६७

अथवातिविषा वालं नागरं घनपर्पटम्
क्वाथो वा शर्करायुक्त अन्तर्दाहोपशान्तये  १६८

बाह्ये पित्तं यदा तिष्ठेदन्ते वा कफमारुतौ
तेनोष्णत्वं शरीरस्य अन्ते शैत्यं च जायते  १६९

तस्य शठ्यादिकं क्वाथं प्रयुञ्जीयात्कफापहम्  १७०

यस्योर्ध्वाङ्गे वातकफावधोगं पित्तमेव च
तेनार्द्धं शीतलं गात्रमर्द्धे चोष्णं च जायते  १७१

तस्य रास्नादिकं क्वाथं प्रयुञ्जीयात्तथोष्णकम्  १७२

यस्योर्ध्वं रक्तपित्तञ्च मध्ये वातकफावुभौ
तेनोर्ध्वं जायते चोष्णमधः शीतं प्रजायते  १७३

तस्य नागरादिक्वाथं युञ्जीयाद्भिषगुत्तमः  १७४

यस्योष्मा दृश्यते चापि मन्दस्त्रष्टा च जायते
बाह्यवेगं विजानीयाज्ज्वरः साध्यो विजानता  १७५

यस्यान्ते जायते चोष्मा तृष्णा दाहः शिरोव्यथा
गम्भीरवेगं जानीयात्कृच्छ्रसाध्यो नृणामपि  १७६

तस्य कुर्यात्प्रतीकारं योगोऽष्टादशको नृणाम्  १७७

अन्ते पित्तं यदा तिष्ठेद्देहे वातकफावुभौ
तेन शैत्यं शरीरस्य उष्णत्वं करपादयोः  १७८

तस्य रास्नादिकः क्वाथः प्रदेयः पिप्पलीयुतः  १७९

देहे पित्तं यदा तिष्ठेदन्ते वातकफावुभौ
तस्योष्मा जायते देहे शीतत्वं करपादयोः १८०

तस्य द्राक्षादिकः क्वाथः प्रदेयो गुडकान्वितः १८१

यत्र यत्र भवेच्छैत्यं तत्र स्वेदो विधीयते
नात्युष्णे स्वेदनं कार्यं ज्वरस्यास्य विजानता १८२

कफपित्तेन निश्चेष्टो भवत्येवानिलः सदा
तस्मादेवानिलाद्रोगाः सम्भवन्ति ज्वरादयः १८३

भ्रमः शैत्यं विह्वलता कम्पो विड्भेदनं क्लमः
श्रमः स्वेदो जल्पनञ्च ज्वरमोक्षे भवन्ति च १८४

प्रस्वेदकण्डू च शिरा च पुष्टा तथा मुखेषु क्षवथुर्लघुत्वम्
अन्नाभिलाषो विपुलेन्द्रियञ्च गतक्लमो गतरुजो मनुष्यः १८५

विमुक्तस्यापि हि शिरोगुरुत्वं नैव मुञ्चति
अविमुक्तं विजानीयाज्ज्वरः पुनरुपैति तम् १८६

यदि धातुगतश्चैव ज्वरो देहे प्रपद्यते
विषमज्वरं जानीयात्स च ज्ञेयश्चतुर्विधः १८७

एकाहिको द्व्याहिकश्च त्र्याहिकश्च तथापरः
वेलाज्वरश्चतुर्थोऽपि विजानीयाद्विचक्षणः १८८

शीतश्च पूर्वं भवति पश्चादुष्णश्च जायते
स साध्यो मनुजे प्रोक्तः शीघ्रं सिध्यति भेषजैः १८९

पश्चाच्च दाहमाप्नोति ज्वरो भवति दारुणः
सोऽपि न मुच्यते शीघ्रं ज्वरो धातुक्षयङ्करः १९०

त्रिकोरुकटयां रुजवातपित्तं स्याच्च पित्तं मस्तके सुभ्रमश्च
पृष्ठे तनुश्लेष्मरुजाकरं स्यात्त्रिधा तृतीयज्वरलक्षणं तत् १९१

कफपित्तात्त्रिकग्राहीपृष्ठाद्वातकफात्मकः
वातपित्तशिरोग्राही त्रिविधः स्यात्तृतीयकः १९२

चतुर्थो द्विविधो ज्ञेयो वातश्लेष्मात्मको ज्वरः
जङ्घाभ्यां श्लेष्मकोज्ञेयः शिरसोऽनिलसम्भवः १९३

एवं विज्ञाय सद्वैद्यः कुर्यात्तत्र प्रतिक्रियाम् १९४

वेलाज्वरो रसगते रक्ते चैकाहिकस्तथा
मांसगोऽपि तृतीयः स्याच्चतुर्थोऽस्थिसमाश्रितः
सर्वधातुगतो ज्ञेयो जीर्णो धातुक्षयङ्करः १९५

भूतजे भूतविद्या स्याद्दधाति शमताडनम्
अभिशापाज्ज्वरो यस्य तस्य शान्तिः प्रतिक्रिया १९६

कामजे कामला पित्तैर्नयेच्च श्वसनं हितम् १९७

क्रोधजे पित्तजे वापि सद्वाक्यैरुपशामयेत्
ओषधी गन्धजैर्मूर्च्छा कारयेत्सेवनं हितम् १९८

निदिग्धिकानागरिकामृतानां क्वाथं पिबेन्मिश्रितपिप्पलीकम्
जीर्णज्वरारोचनकासशूलश्वासाग्निमान्द्यार्दितपीनसेषु १९९

कासाजीर्णे श्वासहृत्पाण्डुरोगे मन्दे वाग्नौ कामलारोचके च
तेषां शस्ता पिप्पली स्याद्गुडेन हन्ति नृणां जीर्णमाशु ज्वरञ्च २००

लघुपञ्चमूलीक्वथितः कषायश्छिन्नोद्भवायाः सह पिप्पलीभिः
जीर्णज्वरे श्वासकफामयघ्नो मन्दाग्निशूलारुचिपीनसानाम् २०१

पटोलपाठाकटुरोहिणीनां फलत्रयं वत्सकनिम्बमोक्षाः
द्राक्षामृताचन्दननागराणां क्वाथः पुराणज्वरनाशनाय २०२

सजीरकं गुडं भक्षेत्सगुडां वा हरीतकीम्
सगुडान्वा तिलान्भक्षेज्ज्वरे च विषमानुगे २०३

गुडार्द्रकं वा सम्भक्षेत्सगुडं त्रिफलाक्वाथम्
क्वाथोऽपि विषमाणान्तु ज्वराणां नाशकारकः २०४

वासाधात्रीफलदारुपथ्यानागरसाधितः
मधुना संयुतः क्वाथश्चातुर्थिकनिवारणः २०५

अगस्तिपत्रं स्वरसैर्निहन्ति नस्ये च चातुर्थिकरोगमुग्रम्
कासं भ्रमं चापि शिरोरुजाञ्च नाशञ्च नस्यं च हितं नराणाम् २०६

रसोनकल्कं तिलतैलमिश्रं योऽश्नाति नित्यं विषमज्वरार्त्तः
विमुच्यतेऽसौ विषमज्वरेभ्यो वातामयैश्चाप्यतिघोररूपैः २०७

पलञ्च निम्बस्य दलानि कुष्ठं वचा गुडं गुग्गुलुसर्षपानाम्
हरीतकी सर्पिर्युतं च धूपं विनाशनं वै विषमज्वराणाम् २०८

सुरसा मूलमावृत्य हस्ते बद्धः शुभे दिने
वेलाज्वरादिकान् हन्ति भूतज्वरनिवारणः २०९

मुस्तामृतामलक्यश्च नागरं कण्टकारिका
कणाचूर्णान्वितः क्वाथस्तथा मधुसमन्वितः २१०

एकाहिकं वा वेलाद्यं ज्वरं जातं व्यपोहति २११

रसोनबीजं विहाय खण्डं कृत्वा निशासु च
तक्रमध्ये विनिक्षिप्य प्रभाते घृतसंयुतम् २१२

सेवितञ्च ज्वरान्हन्ति वेलाद्यान्देहधातुगान्  २१३

पिप्पलीवर्द्धमानञ्च पिबेत्क्षीरं रसायनम्
महौषधं नागरञ्च धान्यं चन्दनवालुकम्  २१४

गुडूचिकापयः पिबेत्तृतीयकज्वरापहम्
अपामार्गस्य मूलञ्च नीलीमूलमथापि वा  २१५

लोहितेन तु सूत्रेण आमस्तकप्रमाणतः
वामकर्णे कटीं बद्ध्वा ज्वरं हन्ति तृतीयकम्  २१६

वानरेन्द्रमुखं दिव्यं तरुणादित्यतेजसम्
ज्वरमेकाहिकं घोरं तत्क्षणादेव नश्यति  २१७

वानराकृतिमालिख्य खटिकायाः पुनः शृणु
गन्धपुष्पाक्षतैर्धूपैरर्चयन्ति भिषग्वराः  २१८

ॐ ह्रां ह्रीं क्लीं सुग्रीवाय महाबलपराक्रमाय सूर्यपुत्रायामिततेजसे एका-
हिकद्व्याहिकत्र्याहिकचातुर्थिकमहाज्वरभूतज्वरभय ज्वरक्रोधज्वरवेला-
ज्वरप्रभृतिज्वराणां दह दह पच पच अवत अवत वानरराज ज्वराणां बन्ध
बन्ध ह्रां ह्रीं ह्रूं फट् स्वाहा । नास्ति ज्वरः ।
ज्वरापगमनसमर्थज्वरस्त्रास्यते  २१९

पुनश्चात्र प्रवक्ष्यामि ज्वराणां रूपलक्षणम्  २२०

सन्तप्तकाञ्चनाभासो हुताशनसमप्रभः
उड्डीनयज्ञोपवीती च रौद्रो ब्राह्मणरूपकः  २२१

जपाकुसुमसङ्काशो रौद्रदंष्ट्रान्वितस्तया
खड्गहस्तो महारौद्रो माहेन्द्रः क्षत्रियो मतः  २२२

पञ्चकप्रसवाभासतप्तकाञ्चनभूषितः
दण्डहस्तो मध्यवेगी वैश्यो ज्वरेश्वरो मतः २२३

कृष्णमेघाञ्जनाकारस्तीक्ष्णदंष्ट्रोज्ज्वलाननः
त्रिनेत्रो ज्वलनप्रभः कालः शूद्रो मतस्तथा २२४

तीक्ष्णवेगः क्षुधायुक्तः शुचिर्द्वेष्टा व्रतप्रियः
मूत्रञ्च किंशुकाभासं पाठशीलोऽतिजल्पकः २२५

बहुश्वासी तृषाक्रान्तो रौद्रब्राह्मणपीडितः
तस्य स्नानं जपं होमं कृत्वा शान्तिः प्रपद्यते २२६

तीक्ष्णज्वरोऽतितृष्णश्च रक्तमूत्रञ्च मूत्र्यते
कुरुते युद्धवार्त्ताञ्च उत्तिष्ठति बलातुरः २२७

तप्तनेत्रो महाश्वासः क्षुधया पीडितस्तथा
मधुगन्धो मुखे स्वेदो माहेन्द्रक्षत्रियार्दितः २२८

तस्यादौ ग्रहहोमं तु देवतास्तवनं शुचिः
दानजपादिभिः कार्यैः प्राप्यते सिद्धिसङ्गमः २२९

मध्यवेगः पीतगात्रः स्वप्नशीलोऽरुचिस्तथा
शीतपवनहृदुष्णः कण्ठस्वेदोऽतिविह्वलः २३०

बहुमूत्री भक्तियुक्तो मौनी पीतान्तलोचनः
नातितृष्णातुरः स्निग्धः स विज्ञेयो ज्वरेश्वरः २३१

तत्र स्वस्त्ययनातिथ्यं द्विजदैवतपूजनम्
जपहोमादिकं सर्वं कर्त्तव्यं शान्तिहेतुना २३२

हृच्छूलश्चातिसारी वा मत्स्यगन्धाङ्गलेपनः

उन्मादी चातितृप्ताद्यो रतेषु विकलेन्द्रियः  २३३

प्रणयी त्वध्वनो भीरुर्ग्रासं नैवाभिकांक्षया
कालभृङ्गारकेणापि शूद्रे सिद्धिर्न जायते  २३४

स्नानं दानजपं सुरार्चनविधिर्होमादयः प्रीतता
भूतानाञ्च विशेषणेन बहुधा तृप्तिं च कुर्यात्ततः ।
गोभूमिं कनकान्नपानविधिना दानेन शान्तिर्भवेत्
सर्वेषां च रुजां विनाशनमिदं शंसन्ति सत्यव्रताः  २३५

वेगं कृत्वा विषं यद्वदाशये लीयते बलम्
कुप्यते प्रबलं भूयः काले दोषो बिषं तथा  २३६

शालिषष्टिकभक्तानां यूषं मुद्गाढकीषु च
पूर्वोक्तानि च शाकानि वातघ्नानि भवन्ति हि  २३७

शतपुष्पा च जीवन्ती तण्डुलीयकवास्तुकम्
घृतेन भाजिका सिद्धा शाकपत्राणीमानि च  २३८

लावतित्तिरमांसादिवार्त्ताकानां तथातुरे
मृगछिक्करिकाद्यानि जाङ्गलानि प्रयोजयेत्  २३९

कोशातकी पटोलं च शुण्ठीकं च हितं भवेत्
वर्जयेद्द्विदलान्नानि विदाहीनि गुरूणि च  २४०

न पिच्छलानि तैलानि तथाम्लानि च वर्जयेत्
दधिमस्तुविशालानि क्षुद्रान्नानि भिषग्वरः  २४१

बहूदकञ्च ताम्बूलं घृतं वापि सुरामपि  २४२

क्रोधं शोकञ्च त्यक्त्वा वै सदा सौख्यं विभुञ्जते

न कुर्याज्जागरं रात्रौ दिवास्वप्नञ्च वर्जयेत् २४३

शकटवाजिकरिद्विपिवाहनं प्रबलं परिवर्जयेत्तु सततम्
ज्वरिणामाशु सुखं बुभुजे सुधीः शुभविधाननिधान उपस्तितः २४४

व्यायामं च व्यवायं च अशनं रात्रिजागरम्
ज्वरमुक्तो न सेवेत तदा सम्पद्यते सुखम् २४५

इति आत्रेयभाषिते हारीतोत्तरे तृतीयस्थाने ज्वरचिकित्सानाम
द्वितीयोऽध्यायः २

तृतीयोऽध्यायः

आत्रेय उवाच
अथातीसार विज्ञानं भेषजं शृणु पुत्रक
ज्वरजो वातिसारश्च भेषजं चोपदिश्यते १

दोषसंशमनं किञ्चित् किञ्चिच्च धातुदूषणम्
स्वस्थवृत्तौ मतं किञ्चिद्द्रव्यं त्रिविधमुच्यते २

तच्च दैवपथाश्रयं युक्तिपथाश्रयं सत्त्वावजयञ्च
मन्त्रौषधमणिमङ्गलबल्युपहारहोमनियमप्रायश्चित्तोपवासस्वस्त्यनप्रणिधाना
दीति दैवपथाश्रयम् । आहारव्यवहारौषधद्रव्याणां योजनेति युक्तिपथाश्र-
यम् । अहितेभ्योऽर्थेभ्यो मनोनिग्रह इति सत्त्वावजयञ्च ३

स्निग्धातिशीतगुरुशीतलपिच्छलान्नं दुष्टाशनातिविषमाशनपान भक्ष्यम्
अद्यादजीर्णमथ शोकविषैर्भयैर्वा शोकार्त्तिदुष्टपयसा तु विपर्ययेषु ४

दौर्बल्यतां विषमभोजनकेन चाप्सु सम्भिद्यते मलमजीर्णं निहन्ति चाग्निः
सञ्जायते हि मनुजस्य तदातिसारो हत्वोदराग्निं मनुजस्य तदातिसारः ५

सञ्जायते स तु पुनर्बहलो मलेन स्यात्पञ्चधा निगदितो मुनिभिर्विधिज्ञैः

रन्ध्ये समासत उदीर्णरुजस्य नाशः क्वाथादिकैर्भवति पाचनकैश्च पूर्वम् ६

युगपज्जायते यस्य ज्वरश्चैवातिसारकैः
ज्वरातिसारो घोरोऽसौ कष्टसाध्यो मनीषिणाम् ७

न पित्तेन विना सोपि जायते शृणु पुत्रक
तस्य नो लङ्घनं प्रोक्तं ज्वरे चैवातिसारके ८

सुवर्चलमतिविषाहिंगुपथ्याकलिङ्गकैः
शुण्ठी वामातिसारघ्नी शूलघ्नी ग्राहिपाचनी ९

पथ्यादारुवचामुस्तानागरातिविषायुतैः
आमातिसारनाशाय क्वाथमेभिः पिबेन्नरः १०

उत्पलं धान्यकं शुण्ठी पृश्निपर्णी बलायुतम्
बालबिल्वं गवां तक्रेणात्युष्णेन च पेशयेत् ११

तेन लाजाकृतं मण्डं देयमानीय शीतलम्
ज्वरातिसारशमनं हुताशनबलप्रदम् १२

शुण्ठीविषातलधरामृतवत्सकानां तिक्ताह्वयं कनकशीतलकः कषायः
पाने विधेयमधुना प्रतिसाधितस्तु ज्वरातिसारशमनाय सदा प्रदेयः १३

पाठेन्द्रभूनिम्बघनामृतानां सपर्प्पटः क्वाथ इह प्रशस्तः
आमातिसारञ्च जयेद्रुतं वा ज्वरेण युक्तं सहजञ्च तीव्रम् १४

शुण्ठी बालकमुस्ता बिल्वं पाठा विषा च धान्यानि
पाचनमरुचौ छर्द्दिज्वरातिसारं विनाशयति १५

वत्सकश्च सुरदारुरोहिणी धान्यबिल्वमगधात्रिकण्टकम्
निम्बबीजगजपिप्पलीवृकीक्वाथ एवमतिसारस्यौषधम् १६

पञ्चमूलीबलाबिल्वगुडूचीमुस्तनागरैः
पाठाभूनिम्बह्रीबेरकुटजत्वक्फलैर्भृतः  १७

इति सर्वानतीसारान्वमिश्वासज्वरार्दितान्
सशूलोपद्रवांश्चासौ हन्याच्चासुरदारुणम्  १८

पञ्च मूल्यतिसामान्या योज्या पित्ते कनीयसी
महती पञ्चमूली तु वातश्लेष्मज्वरे हिता  १९

उत्पलं दाडिमत्वक्च केशरं तथा मधु पद्मकम्
धात्री पिष्टा तण्डुलतोयैः पाचनं ज्वरातिसारघ्नम्  २०

उशीरं धान्यकं मुस्तं सबिल्वं बालकं बला
तथा च धातकी पुष्पं कषायस्य प्रशस्यते  २१

ज्वरातिसारशमनं सहशोणितपैत्तिकम्
निहन्ति शोफं सकलं रुचिप्रदविपाचनम्  २२

विगतामातिसारं चिरोत्थितं रक्तसहितमतिवृद्धम्
मधुना सहितः शमयत्यरलुः पुटपाकनिर्यासितः  २३

जम्बूवटोदुम्बरप्लक्षको हि नागश्च प्रपौण्डरिकं शमी च
गुन्द्रः सचूतोऽम्बुदजीविकाया आसां हि पुञ्जञ्च सदा विदध्यात्  २४

प्रस्थद्वयेनप्रपिबेद्धि तावद्यावद्विशेषांशमिदं प्रजायते
पुनः कटाहे विपचेच्च सम्यग्दार्वीप्रलेपः स्वरसश्च यावत्  २५

उत्तार्य नूनं भिषगुत्तमेन क्षौद्रेण मिश्रं हरतेऽतिसारम्  २६

हारीतेन तथा प्रोक्ता काकमाची सुपूजिता
आलोक्यानेकशास्त्राणि आत्रेयेणापि पूजिता  २७

जम्बूत्वचं वत्सकवल्कलं च निष्क्वाथ्य नूनं सलिले समीरणम्
चतुर्विभागेष्वपि शेषितेषु उत्तार्य वस्त्रेष्वथगालयेच्च २८

पुनः कटाहे विपचेच्च सम्यग्दार्वीप्रलेपः स्वरसस्तु यावत्
उत्तार्य शीते मधुना विमिश्रं लीढं हरेदप्यतिसारमुग्रम् २९

कुक्षो दरे वक्षसि नाभिदेशे प्रायुप्रदेशे सततं निरुद्धे
वातस्य रोधश्च शकृद्विभङ्गो भवन्ति सर्वेष्वतिसारकेषु ३०

सफेनिलं पिच्छलमेव रूक्षमल्पं सकृदामसशब्दशूलम्
कृष्णं भवेद्गात्रविचेष्टनञ्च वातातिसारे प्रवदन्ति तज्ज्ञाः ३१

तस्यादौ लङ्घनं चैकमल्पे वा नैव लङ्घनम्
तस्माद्देयं कषायं तु पानभोजनमेव च ३२

उदीच्यधान्यस्य जलेन कल्कं पाने हितं पाचयतेऽतिसारम्
तृष्णापहं दाहविनाशनञ्च सशूलहिक्कासुविनाशनं स्यात् ३३

बालकद्वयमोचहरीतकीपर्पटेन सहितं जलेन च
क्वाथपानमिदमेवातिसारे नाशमाशु कुरुते च विट्छान्तिम् ३४

शालिपर्णी पृश्निपर्णी बृहती कण्टकारिका
बालाश्वदंष्ट्रा बिल्वानि पाठा नागरधान्यकम् ३५

एतदाहारसंयोगे हितं सर्वातिसारिणाम्
तिन्दुकत्वचमाहृत्य काश्मरीपत्रवेष्टितम् ३६

मृदा विलिप्य विधिवद्दहेन्मृद्वग्निना भिषक्
रसं गृहीत्वा मधुसंयुतं पानं सर्वातिसारघ्नञ्च ३७

तुलामथार्द्रागिरिमल्लिकायाः सङ्कुट्य कर्षञ्च समादधीत

तस्मिन्सपूते पलसंसितञ्च देयञ्च पिष्ट्वा सह शाल्मलेन ३८

पाठा समङ्गातिविषा समुस्ता बिल्वञ्च पुष्पाणि च धातकीनाम्
प्रक्षिप्य भूयो विपचेच्च तावद्दार्वीप्रलेपः स्वरसस्तु यावत् ३९

पीतस्त्वसौ कालविदा जलेन मण्डेन वाजापयसाऽथवापि
निहन्ति सर्वमतिसारमुग्रं कृष्णं सितं लोहितपीतकञ्च ४०

दोषं ग्रहण्यां विविधं च रक्तपित्तं तथार्शांसि सशोणितानि
असृग्दरं चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम् ४१

घर्मेण चोष्णान्नविभोजनेन घर्मेण तप्तोदकसेवनेन
शोकेन तापेन रुषा कटुत्वे क्षारेण पित्तासृक्सारकः स्यात् ४२

तेनारुणं पीतमथातिनीलं दुर्गन्धशोषज्वरपाण्डुयुक्तम्
भ्रमार्त्तिमूर्च्छा च तृषाङ्गदाहः पित्तातिसारस्य च लक्षणानि ४३

शालिपर्णीपृश्निपर्णीबलाबिल्वैस्तु साधितः
दाडिमाम्लो हितः पेयः पित्तातीसारशान्तये ४४

कुशकाशेक्षुमूलानां शालीनलभवैर्जलैः
मूलानां क्वाथमाहृत्य शस्तं पित्तातिसारिणाम् ४५

धान्यपञ्चकमूलानां क्वाथः पित्तातिसारिणाम् ४६

शाल्मलीमूलत्वग्गुडदुग्धपेषितं च
पानं पित्तातिशमनं सरक्तदाहशोषहरम् ४७

दुःस्वप्नादिश्रमाद्वै सहजजडतया शीतसंसेवनेन स्निग्धाहारातिभोज्यात्स-
तिलपलगुडैश्चेक्षुखण्डैर्गुरूणाम् ।
शीतातिस्नानलौल्यात्पयसि दधियुताहारसंसेवनाच्च जातः श्लेष्मातिसारो

जठरहुतभुजहन्तिपुंसामपाकः ४८

तेन श्लेष्मा शुष्कभेदारुचिः स्यात्सान्द्रं विस्त्रं जाड्यता रोमहर्षः
मन्दाग्नित्वं मन्दवेगो विशिष्टः सालस्योऽपि विद्धि सारः कफोत्थः ४९

तस्यादौ लङ्घनं प्रोक्तं ज्ञात्वा देहबलाबलम्
पाचनं च विधातव्यं त्र्यूषणाद्यं भिषग्वर ५०

त्र्यूषणमभया हिंगु चातिविषा रुचकं वचायुक्तम्
मधुसहितं लेहनं नृणां गङ्गामपि वाहिनीं रुन्ध्यात् ५१

कालिङ्गपाठातिविषा बला च सोदीच्यमुस्तामरिचानि शुण्ठी
गुडेन क्षौद्रेण प्रशस्तकल्को रक्तातिसारे कफजे शमाय ५२

वत्सकातिविषबिल्वमुस्तकं वालकेन सहितं जले न तु
क्वाथपानमतिशूलरक्तपूयनाशं ज्वरयुतेऽतिसारके ५३

यस्तु रक्तं च शुद्धं विरेचने शोषदाहमतिरिञ्चेत्
रक्तातिसार इति ज्ञेयो वैद्यैर्महामतिभिः ५४

धान्यनागरमुस्ता च वालकं बालबिल्वकम्
बला नागबला चेति क्वाथो रक्तातिसारिणाम् ५५

दाडिमं च कपित्थं च पथ्याजंब्वाम्रपल्लवान्
पिष्ट्वा देया मस्तुयुक्ता रक्तातीसारवारणाः ५६

गुडेन पक्वं दातव्यं बिल्वं रक्तातिसारिणे
मनुजे पथ्या वा मधुयुक्ता वा दध्ना रक्तातिसारघ्ना ५७

वत्सकातिविषानागराभया पिषितं च मस्तुसंयुतम्
लेहस्तु शस्तो मधुनापि मानुजे रक्तवाहमतिवारयत्यपि ५८

कुटजत्वक्च पाठा च विश्वं बिल्वं च धातकी
मधुना सहितं चूर्णं देयं रक्तातिसारघ्नम्  ५९

वराहवासासदृशं तिलाभं मांसधावनाभासम्
पक्वजम्बूफलसदृशं सन्निपातः प्रवहताम्  ६०

तुलामथार्द्रागिरिमल्लिकायाः सङ्कुटच पक्त्वा रसयाददीत
तस्मिन्सुपूते पलसम्मिते च देयं च पिष्ट्वा सह शाल्मलेन  ६१

पाठा समङ्गातिविषासमुस्ता बिल्वं च पुष्पाणि च धातकीनाम्
प्रक्षिप्य भूयो विपचेच्च तावद्दार्वीप्रलेपः सरसस्तु यावत्  ६२

पीतस्ततः कालविदा जलेन मण्डेन च क्षौद्रयुतेन वापि
निहन्ति सर्वमतिसारमुग्रं कृष्णं सितं लोहितपीतकं च  ६३

दोषं ग्रहण्यां विविधं च रक्तं पित्तस्य चार्शांसि सशोणितानि
असृग्दरं चैवमसाध्यरूपं निहन्त्यवश्यं कुटजाष्टकोऽयम्  ६४

पथ्यापञ्चमूलक्वाथश्चतुर्भागावशेषतः
तत्र क्वाथे पुनश्चूर्णमिमानि वौषधानि तु  ६५

शृङ्गवेरं तथा लाक्षा पिप्पली कटु रोहिणी
दाडिमफलत्वक्चूर्णं दार्वी सवत्सकं विषम्  ६६

आटरूषकचूर्णानि संक्षिप्यात्र निघट्टयेत्
आजं दुग्धं तदर्द्धेन घृतं चाष्टांशकं क्षिपेत्  ६७

दार्व्या विलेपितं ज्ञात्वा गुडस्य षोडशानि तु
पलानि मिश्रितं तत्र देयमप्रातराशने  ६८

त्रिदोषसन्निपातोत्थ अतिसारश्च दारुणः

शूलमूर्च्छाभ्रमानाहकामलानां विपाचनः ६९

क्षतक्षीणक्षयाणां तु हितोऽयममृतो वटः ७०

एकबिल्वागुरुरोध्रचूर्णं मध्वादियोजितम्
रक्तातिसारशमनं बालानां क्षीणधातुकम् ७१

यदा गुह्यं निरस्येत्तु तदा कुर्यात्क्रियामिमाम्
सहचर्या बलानां च रसो ग्राह्यो घृतं पुनः ७२

पक्वघृतेन लेपः स्यात्तस्य चेदं प्रशस्यते
अरणीपल्लवक्वाथो वाप्यं लोष्टं सचन्दनम् ७३

प्रतप्तमथवाग्निनिभं तथा नरस्य निर्वाप्य काञ्जिकमथ विदधीत तद्वत्
सौख्यं च सम्यग्गुदसेचनकं प्रशस्तं संवेश्य मध्यतो गुदं दृढबन्धनं स्यात्
७४

लशुनकुणपगन्धं पूयगन्धं घनं वा पललजलसमानं पक्वजम्बू निभं वा
घृतमधुपयसाभं तैलशैवालनीलं सघनदधिसवर्णं वर्जयित्वातिसारम् ७५

भ्रममदनमकार्शं शूलमूर्च्छाविदाहं श्वसनमतिविवर्णं छर्द्दिमूर्च्छातृडार्त्तम्
विकलमतिशयेन सौख्यशोफज्वरार्त्तिः स परिहरतु दूरं सद्विधाता न दृष्टः
७६

शोफं शूलं ज्वरं तृष्णां श्वासं कासमरोचकम्
छर्दिमूर्च्छां च हिक्कां च दृष्ट्वातीसारिणं त्यजेत् ७७

दृष्ट्वा शोफं तथाध्मानं हिक्कां छर्दिमरोचकम्
तथा च पाण्डुरोगार्त्तमतिसारयुतं त्यजेत् ७८

यदल्पमल्पं क्रमशो निषेवितं मलं भगाधारगतं च नित्यम्

हित्वान्तराग्निं कुरुते नरस्य विकारमाहुर्ग्रहणीति संज्ञाम्  ७९

निर्वृत्ते चातिसारे शमयति दहनं भूयसा दोषितोऽपि
भुक्त्वा नाश्यमलांशं बहुदिनमनिशं सञ्चयित्वा निसर्त्ति ।
वारं वारं विगृह्य सहजमसरलं पक्वमानं घनं वा
दुर्व्याधिर्घोररूपो मनुज रुजकरः स्यात्तथा ग्रहणीति  ८०

लक्षयेच्चातिसारे च विज्ञेयं ग्रहणीगदम्
वातिकं पैत्तिकं चैव श्लेष्मिकं सान्निपातिकम्  ८१

नैव चैकेन दोषेण जायते ग्रहणीगदः
तेन संक्षीयते देहमन्तर्दाहो विपाकता  ८२

तिक्तः कषायः कटुकाम्लविदाहिरूक्षः शीताल्पभोजनपरैः श्रम मैथुनैश्च
भाराध्वहस्तिरथवाहनधावनेन संक्रुद्धवायुहननेऽनल वेगमेनम्  ८३

तस्मात्तदग्रमनिलेन च छिद्यमानं रक्तेन युक्तमनिले परिपाकमेति
सञ्जायतेऽपि मनुजस्य तथा तृतीयं गुल्मेति नाम स च पञ्चविधो बभूव  ८४

प्लीहा यकृज्जठरकण्डुमलस्य बन्धोऽष्ठीला क्रिमिर्जठररोगभवोऽथ षष्ठः
एते भवन्ति ग्रहणीपरिवर्त्तमाना घोरास्तथा दुःखदाश्च मनुजस्य चित्ते  ८५

कण्ठस्य शोषस्तिमिरं तथा पार्श्वशूलं नाभौ तथातिकृशतातिविषूचिका च
कर्णे स्वनोऽतिवमनं क्लमशूलमोहः श्वासेन गुल्ममिति लक्षणमेव विद्धि
८६

यस्यैतानि च लिङ्गानि गुल्मिनं तं विदुर्बुधाः
ग्रहणी नाम साध्यो यस्तस्य वक्ष्यामि लक्षणम्  ८७

चित्रं सशब्दं सृजतेऽत्र वर्चः शोफोऽनिलो वर्चमतीव रूक्षम्
श्वासार्त्तियुक्तं तनुशैथिलं च स्रावो ग्रहण्यानिलकोपतः स्यात्  ८८

विदाहि शीर्णं सरुजं तृषार्त्तं दुर्गन्धपीतारुणनीलकालम्
संसृज्यते यस्य मलो विमिश्रः पित्तोद्भवा सा ग्रहणीति संज्ञा ८९

हृल्लासश्छर्दिः श्वसनं शोफः कासो जडत्वं च सशीतता च
वैरस्यमास्ये गुरुगात्रता स्यादरोचकं शङ्खशकृद्ग्रहस्तु ९०

त्रिभिः समेतं गदितं च चिह्नमेतस्य कोपो मधुरास्यता वा
दाहोऽथ मूर्च्छा श्वसनं जडत्वं स सन्निपातग्रहणीगदः स्यात् ९१

दारुनागरनिशा सवासका कुण्डली मगधजा शठी घनम्
रास्ना सभार्ङ्गी सरलाह्वपुष्करं पाचनं भवति वातिकग्रहे ९२

नलवेणुकुशानां च काशेक्षूणां च मूलकम्
क्वाथपानं हितं वास्य पाचनं पैत्तिके ग्रहे ९३

व्याघ्रीग्रन्थिकचव्यसुरसा शुण्ठी दाडिमम्
रजनी घनचित्रकमेवं हिक्कामथकफग्रहणीं हन्ति ९४

शुण्ठी कणा द्विरजनी च घनं तथा च योज्यः पुनः प्रतिविषं त्रिफला विडङ्ग
सिन्धूत्थवह्नित्रिकटुं त्रिसुगन्धियुक्तं चूर्णं पुनर्गुडयुतं घृतमिश्रितं च ९५

कृत्वा बिडालपदमात्रकमोदकाश्च भक्षेद्यथा जलमपि ग्रहणीगदे च
अर्शोभगन्दरमरोचकगुल्ममेहाञ्छूलाश्मरीकृमिजरोगहरं च पाण्डु ९६

श्रेष्ठं रसायनमिदं बलिनाशनं स्याद्वृष्यं बलं विदधतेऽतिकृशत्वदोषम्
वर्णेन्द्रियसकलदीप्तिकरं रुजोघ्नं कुष्ठभ्रमापहरणं कुरुतेसदैव ९७

हरीतकीपञ्चशतानि धीमान् द्रोणेन गोमूत्रशतेन पाच्यम्
मृद्वग्निना यावदशेषमेव मूत्रं विजीर्णे विधिवद्विधिज्ञः ९८

निर्वाप्य चूर्णे प्रतिशोष्य शीतं छायाविशुष्कान् प्रविदार्य चाष्टीः

चूर्णं च शुण्ठीमगधाविषाश्च सुगन्धिमूर्वाचविक्रान्विताश्च ९९

निष्क्वाथ्य कल्कः कुटजस्य तावद्दर्व्योपलेपी भवतीति यावत्
तस्यार्द्धभागेन गुडं विमथ्यात्क्षीरं तदर्द्धेन गवाजकं वा १००

निर्वापितं तं घृतभाजते च संस्थापितं प्राङ्मुदितेन तेन
सिन्धूत्थवह्नित्रिकटुं त्रिसुगन्धियुक्तं चूर्णं पुनर्गुडयुतं घृतमिश्रितं च १०१

चूर्णेन तेन सकलग्रहणीयपाण्डुशोषाश्मरीं कृमिजगुल्ममथातिसारान्
प्लीहायकृच्छ्वासिषु मानवेषु विषूचिका पीनसमस्तकार्त्तिम् १०२

विनाशनः सद्यस्तथा ज्वराणामध्वश्रमक्षीणबलोदराणाम्
एकाहिकादिज्वरनाशनःस्याल्लेहोऽभयाद्योऽमृतवन्नराणाम् १०३
इत्यभयाद्योऽवलेहः

द्राक्षाक्षीरेण पक्त्वा यावद्धनं दर्व्युपलेपि च
दृष्ट्वा पश्चात्तैः समालोड्य चेमान्यौषधानि मतिमान् १०४

पर्पटातिविषा मूर्वा पटोलं घनवालकम्
तथाभयानां चूर्णं तु समशर्करयायुतम् १०५

तेन क्षीरेण संयोज्य विदार्याः कन्दमेव च
घृतेन नवनीतेन पिण्डं कृत्वाऽथ भक्षयेत् १०६

सपित्तग्रहणीपाण्डुकामलार्त्तितृषापहम्
भ्रम मूर्च्छां तथा हिक्कां तमकोन्मादमश्मरीम् १०७

मेहपित्तासृजं कुष्ठं नाशयत्याशु निश्चितम् १०८

इति द्राक्षादिक्षीरम्

इति आत्रेयभाषिते हारीतोत्तरे तृतीयस्थाने अतीसारचिकित्सानाम
तृतीयोऽध्यायः ३

# चतुर्थोऽध्यायः

आत्रेय उवाच
शृणु पुत्र प्रवक्ष्यामि गुल्मानां चैवलक्षणम्
तस्मात्तेषां प्रतीकारमौषधानि विशेषतः १

पञ्चधा सम्भवंत्येते गुल्मा जठरसंसृताः
हृत्कुक्षौ नाभिबस्तौ च मध्ये च पञ्चमः स्मृतः २

हृदयस्थो यकृन्नाम कुक्षौ साष्ठीलकोच्यते
मध्ये प्लीहा समाख्यातो बस्तौ चण्डविवृद्धकः ३

नाभौ संलक्ष्यते ग्रन्थी नामान्येषां पृथक् पृथक्
अतः प्रकोपं वक्ष्यामि येन कुर्वन्ति बाधकम् ४

स्वभावात्पित्तरक्तोत्थे सेविताम्लविदाहिनम्
उष्णं च क्षारमद्यं वा चोष्णपानातिसेवनात् ५

तथा शोकः श्रमोऽध्वानां शोषात्संक्षोभनादपि
उच्चभाषण गानेन धनुर्ज्याकरणेन च ६

पृष्टं मुष्टयभिघातेन हृदयात्ताडनेन वा
भारणोद्धारणाद्वापि रक्तं शोषयते हृदि ७

तेन गुल्मेति नाम तु जायते रक्तपित्तकम्
कदाचित्रिषु दोषेषु सम्भवश्चास्य दृश्यते ८

वातेनोदीरितश्चैव कफेन च घनीकृतम्
पित्तेन पाकतां प्राप्तं त्रिदोषसंसृतं यकृत् ९

लक्षणं तस्य वक्ष्यामि येन तच्चापि लक्ष्यते

क्षीयते येन मनुजो मृत्युमाशु प्रपद्यते १०

वमिः क्लमस्तथोद्गारो हृल्लासः श्वसनं भ्रमः
दाहोऽरुचिस्तृषा मूर्च्छा कण्ठे दाहः शिरोव्यथा ११

हृच्छूलं च प्रतिश्यायष्ठीवनं कटुकैः सह
सशल्यं हृदि शूलं च निद्रानाशः प्रलापतः १२

हृदये मन्यते दार्ढ्यमुदरं गर्जति भृशम्
एतैर्लिङ्गैर्विजानीयाद्यकृत्कोष्ठान्तवक्षसि १३

यदि साक्षात्त्रिकटुकं कुष्ठं तथा पञ्चमकं यवानीम्
षष्ठं च सिन्धूत्थविमिश्रितं च सूक्ष्मं च चूर्णं सह रामठेन
भक्षेच्च तस्योपरि तक्रपानं निष्क्वाथ्य तोयं च पिबेच्च वाम्लम् १४

सौवीरकं वा विनिहन्ति शीघ्रं यकृद्विधानुदरशूलकासान्
विषूचिकाजीर्णकफामयघ्नं पाड्वामयार्त्तिग्रहणीं सगुल्माम् १५

शुण्ठ्यादिचूर्णं त्वरितं निहन्ति
क्षारं मुष्ककर्किशुकार्जुनधवापामार्गरम्भातिला जीवन्तीकनकाह्वयञ्चरजनी
कूष्माण्डवल्ली तथा ।
वासासूरणमेव तीव्रदहनं प्रज्वाल्य भस्मीकृतं तोयेन प्रतिसेव्य निभृतपयः
पानं विधेयं यकृत् १६

तथाशूलानाहविबन्धकफजान्रोगाञ्जयेत्कामलान्विद्रधीन् हृदिशूलपाण्डु-
ग्रहणीशोफार्शसां पीनसान् ।
मन्दाग्नीनामजीर्णकृम्यलसगुदभ्रंशमोहांस्तथा क्षतजवृद्धिस्तेन सदाहशूल-
कास्युद्गारता वमिः १७

पूयाभः पततेश्लेष्मा पूतिगन्धोऽतिविस्रकः
रक्ताभस्तत्र सङ्काशष्ठीवते स मुहुर्मुहुः

तथातिसार्यते रक्तं श्रमः संक्षीयते वपुः १८

क्षतजाः संसृता गात्रे यकृद्वक्षसि संसृतः १९

श्वासस्तृषा वमिर्मोहः शोफः स्यात्करपादयोः
रुचिबन्धोऽतिसारश्च यकृद्दुरे परित्यजेत् २०

अतो वक्ष्यामि भैषज्यं येन सम्पद्यते सुखम्
तस्यादौ लङ्घनं चैकं पाचनं तदनन्तरम् २१

शुण्ठ्योपकुल्या तिमिरं शठीनां यवानिकाभीरुहरीतकीनाम्
क्वाथोथकल्क पाचनके प्रशस्त आनाहगुल्मार्त्तिविषूचिकानाम् २२

भद्रोपकुल्याभयशृङ्गवेरं पथ्या त्रिभागा च कणाचतुर्था २३

क्षतक्षयं यकृत्पूर्वं वोपवासं च पाचनम्
न देयं हिंगुसंयुक्तं चूर्णं हितं तद्रातुरे २४

निम्बनीपधरवेतसं निशा काश्मरी च तुलसी च सिंहिका
क्वाथ एव हृदयामयापहः शूलमाशु यकृदास्यनाशकृत् २५

सौराष्ट्रिकासीसमहौषधानि दुरालभाजातिप्रवालकं च
दार्वी यवानी ककुभं समङ्गा क्वाथः ससर्पिर्यकृदाशु हन्ति २६

धवार्जुनकदम्बानां शिरीषबदरीषु च
निष्क्वाथ्य पानमामघ्नं विषूच्या शूलवारणम् २७

कदलीक्षारमादाय शङ्खक्षारमथापि वा
प्रस्राव्य जलपानं तु हिंगुसौवर्चलान्वितम् २८

आमं हरति विसृष्टं शूलं चाशु नियच्छति
विषूचिकानां शमनमजीर्णं जरयत्यपि २९

मातुलुङ्गरसं ग्राह्यं द्विगुणं तत्र काञ्जिकम्
हिंगुसौवर्चलयुतं पानं हन्ति विषूचिकाम्  ३०

क्षारं तोयं च पानाय दाहस्योपरि पाचयेत्
शूलाध्मानं निहन्त्याशु कुरुते चाग्निदीपनम्  ३१

आमेषु वमनं कुर्याद्विपक्वे चैव लङ्घनम्
विशिष्टस्वेदनं निद्रा रसशेषे विरेचनम्  ३२

उन्मत्ते चातिसारे च वमिक्रोधातुरेषु च
अजीर्णे तु विषूच्यां च दिवास्वप्नं हितं भवेत्  ३३

न हितं श्लेष्मणि चैव हृद्रोगे तु शिरोरुजि
हृल्लासे च प्रतिश्याये दिवास्वप्नं च वर्जयेत्  ३४

फलत्रयं त्र्यूषकरञ्जबीजं रसं तथा दाडिममातुलुंग्यः
निशायुतं पेष्यकृता च वर्त्तिस्तदञ्जने हन्ति विषूचिकाञ्च  ३५

रास्ना विशाला च सुरब्दकुष्ठं शिग्रु वचा नागरकं शताह्वम्
आग्नेय पिष्टाहपुषाविदार्यः खल्लीं विषूचीषु निवारयन्ति  ३६

स्वेदो विधेयो घटकस्य बाष्पमेकैर्घटाभिर्वसनेन चोष्णः
तथोष्णपाणिं प्रतिसेक एवं जयेद्विषूचीं जठरामयानाम्  ३७

गन्धकं सैन्धवं त्र्यूषं निम्बूरसविमर्दितम्
आतुरो भक्षयेच्छीघ्रं विषूचीनां निवारणम्  ३८

इति आत्रेयभाषिते हारीतोत्तरे तृतीयस्थाने गुल्मचिकित्सानाम
चतुर्थोऽध्यायः  ४

पञ्चमोऽध्यायः

आत्रेय उवाच

क्रिमयो द्विविधाः प्रोक्ता बाह्याभ्यन्तरसम्भवाः
बाह्यायूकाः प्रसिद्धाः स्युराभ्यन्तराश्च किञ्चकाः १

सप्त विधो भवेद्बाह्यः षड्विधोऽन्तःसमुद्भवः
तेषां वक्ष्यामि सम्भूतिं बाह्यानाभ्यन्तरे नृणाम् २

रौक्ष्यादतिमलात्स्वेदाच्चिन्तया शोचनादपि
कफाधातुसमुद्भूतास्तीक्ष्णा यूका भवन्ति हि ३

यूकाः कृष्णाः पराः श्वेतास्तृतीया चर्मणि स्थिता
सूक्ष्मातिविकटा रूक्षा चर्मभा चर्म यूकिका ४

चतुर्थी बिन्दुकी नाम वर्त्तुला मूत्रसम्भवा
मत्कुणा स्याच्च पञ्चमी बाह्योपद्रवकारिणी ५

यूका मस्तकसंस्थाने श्वेता शिरोनिवासिनी
चर्मयूका नेत्रचर्मे सूक्ष्मे रोमणि यष्टिका ६

रूक्षान्नयवान्नगोधूमपिष्टैर्गुडेन वा क्षीरविपर्ययेण
दिवाशयानेन सपिच्छलेन घर्मेण तापोदकसेवनेन ७

सञ्जायते तेन मलाशयेषु क्रिमिव्रजं कोष्ठविकारकारि ८

षड्विधास्ते समुद्दिष्टास्तेषां वक्ष्यामि लक्षणम्
कफकोष्ठं मलाधारं कोष्ठे सर्पन्ति सर्पवत् ९

पृथुमुण्डा भवन्त्येके केचित्किञ्चुकसन्निभाः
धान्याङ्कुरनिभाः केचित्केचित्सूक्ष्मास्तथाणवः १०

सूचीमुखाः परिज्ञेयाश्चान्त्राणि सीदयन्ति ते
वक्ष्यामि लक्षणं तेषां चिकित्साञ्च शृणुष्व मे ११

ज्वरो हृद्रोगशूलं वा वमिहृत्क्लेदनं भ्रमः
रुचिबन्धो विवर्णत्वमतीसारः सफेनिलः  १२

गर्जनं जठरे चैव मन्दाग्नित्वं च जायते
पिपासा पीतता नेत्रे किञ्चुकैः पीडितस्य च  १३

सूचीवतुद्यतेऽन्त्राणि रक्तं चेवातिसार्यते
यकृद्वा भक्ष्यन्त्यन्ये रक्तं वा वमते भृशम्  १४

क्लेदो मुखेऽरुचिर्जाड्यं मन्दाग्नित्वं च वेपथुः
क्षुत्तृष्णा च ज्वरो ज्ञेयाः सूचीमुखक्रिमीरुजः  १५

ये च धान्याङ्कुरास्तेषां वक्ष्याम्यथ च लक्षणम्
मलाशयस्थाः क्रिमयो मलं जग्धन्ति ते भृशम्  १६

तैस्तु सम्पीड्यते देहे कृशत्वविद्रधिभेदपरुषताः
तेन गात्रे रुजत्वञ्च हृत्क्लेदो यवक्रिमयो मताः  १७

हारीतः संशयापन्नः पादौ संगृह्य पृच्छति
कथं देहे मनुष्यस्य मलसूत्ररसाशये  १८

सम्भवन्ति कथं चादौ वर्द्धयन्ति कथं पुनः
कथं च शीर्णेऽन्नरसे नानाहारविभक्षणे  १९

जायन्ते केन क्रिमयः सूक्ष्मा वाप्यधोगामिनः
नानामपक्वभक्ष्यान्नं दहते वा हुताशनः  २०

कथं ते क्रिमयश्चान्ते न दह्यन्तेंऽन्तराग्निना
एवं पृष्टो महाचार्यः प्रोवाच मुनिपुङ्गवः  २१

आत्रेय उवाच

शृणु पुत्र महाबाहो क्रिमिसम्भवकारणम्
विरुद्धान्नरसैः पुत्र रक्तं चैवास्य कुप्यति २२

कफेनैकदिनं याति शुक्रेण कारणं व्रजेत्
पञ्चभूतात्मके काये ते तु जाताः सचेतनाः २३

कोष्ठाग्निना न दह्यन्तेन जीर्यन्ते रसानिति
विषे जातो यथा कीटो न विषेण मृतिं व्रजेत् २४

तथा हुताशनोद्भूतं न हुताशेन जीर्यते २५

भेषजं सम्प्रवक्ष्यामि येन तेऽपि तरन्ति वै
पतन्ति वा शमं यान्ति भेषजानि शृणुष्व मे २६

वचाजमोदा क्रिमिजित्पलाशबीजं शठी रामठकं त्रिविश्याः
उष्णोदके तत्परिपिष्य पेयं पतन्ति शीघ्रं शतधार्त्तमलम् २७

शटीयवानीपिचुमन्दपुत्रान् विडङ्गकृष्णाति विषारसानाम्
सम्पिष्य मूत्रेण त्रिवृत्प्रयुक्तं विनाशनं सर्वकृमीरुजानाम् २८

मरिचं पिप्पलिमूलं विडङ्गशिग्रुजवानिकात्रिवृतः
गोमूत्रेण तु पेष्यं पानं शीघ्रं क्रिमीन् हन्ति २९

मुस्ताविशालात्रिफलासुपर्णिशिग्रूसुराह्वं सलिलेन कल्कः
पानं सकृष्णाक्रिमिशत्रुचूर्णं विनाशनं सर्वकृमीरुजां च ३०

सुरसा च सुरदारु मागधी विडङ्गकम्पिल्लविडङ्गदन्तिनी
त्रिवृत्ताडकरसोनकं क्रिमिहृद्रोगहृत्सलिलेन सेवितम् ३१

मातुलुङ्गस्य मूलानि रसोनः क्रिमिजित्त्रिवृत्
अजमोदानिम्बपत्रं गोमूत्रेण तु पेषयेत् ३२

पानमेतत्प्रशंसन्ति क्रिमिदोषनिवारणम्
ज्वरप्रोक्तानि पथ्यानि क्रिमिदोषे प्रदापयेत्  ३३

इत्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने क्रिमिचिकित्सा नाम पञ्चमोऽध्यायः
५

## षष्ठोऽध्यायः

आत्रेय उवाच
अग्निश्चतुर्विधः प्रोक्तः समो विषमतीक्ष्णकः
मन्दस्तदापरः प्रोक्तः शृणु चिह्नानि साम्प्रतम्  १

वातपित्तकफसाम्यात्समः सञ्जायतेऽनलः
तैरेवं विषमं प्राप्ते विषमो जायतेऽनलः  २

तीक्ष्णपित्ताधिकत्वेन जायते जठराग्निकः
वातश्लेष्माधिकत्वेन जायते मन्दसंज्ञकः  ३

यद्भुक्तं प्रकृतिस्थं तु पाचयत्यन्नसञ्चम्
स समो नाम निर्दोषः सर्वधातुविवर्द्धनः ४

किञ्चित्पाचयते भक्ष्यं कदाचिदविपक्वकः
वतेन वा न विषमं करोत्यपि विषूचिकाम्  ५

प्रकृत्या चाधिकं स्नाति तृप्तिं न लभतेऽपि च
सदाहपीतता नेत्रे तीक्ष्णो वै क्षयकृद्बले  ६

यद्भोक्तुन्नैव शक्नोति यत्तु श्लेष्मबलाधिकात्
सोऽपि मन्दानलो नाम गुल्मोदरपरो मतः  ७

समेन समता देहे देहधातुबलेन्द्रियैः
हृष्टः सम्पूर्णगात्रस्तु सचेष्टो वर्त्तते नरः  ८

विषमे वानिलाद्याश्च ग्रहणी चातिसारकाः
प्लीहा गुल्मो विषूची च शूलोदावर्त्तसंज्ञकः  ९

आनाहो मन्दचेष्टत्वं जायते विषमाग्निना
वातकफावुभौ क्षीणौ तीव्रो भवति पित्तकः  १०

भोजने लभते प्रीतिं भुक्त्वा चैव च जीर्यते
तेन भस्मकसंज्ञस्तु जायते जठरानलः  ११

पाण्डुः पित्तातिसारस्तु राजयक्ष्मा हलीमकः
भ्रमः क्लमोऽतिवैकल्यं यकृद्वापि प्रमेहकाः  १२

शूलमूर्च्छा रक्तपित्तं पित्ताम्लं मूत्रकृच्छ्रकम्
तेन संक्षीयते गात्रं जायतेऽन्नस्य लौल्यता  १३

भक्षिताः काष्ठपाषाणाः जीर्यन्ते तस्य देहिनः
इति प्रोक्तं निदानं च नरस्याग्निप्रकोपनम्  १४

बहुधापि न वोक्तं तु ग्रन्थविस्तारशङ्कया  १५

अतो वक्ष्ये समासेन भेषजानि पृथक्पृथक्
पाचनं शमनं चैव दीपनञ्च तथोपरि  १६

रास्ना शठी प्रतिविषा सुरसा च शुण्ठी सिन्धूत्थहिङ्गु मगधा च सुवर्चलं च
चूर्णं कृतं सगुडमोदकभक्ष्यमाणं वातात्मकन्तु विषमाग्निं समीकरोति  १७

शूलानजीर्णविषमाग्निविषूचिकासु वातादयः सकलगुल्मविनाशनं स्यात्
भुक्तोपरि क्वथितमेव पिबेत्सुखोष्णं श्रेष्ठं तथोपरि समस्तरसानुभोज्यम्  १८

द्राक्षाभया तिक्तकरोहिणी च विदारिका चन्दनवासकं च
मुस्ता पटोलं च किरातकानां कृष्णा बला च विकचाविषाणा  १९

पलालवङ्गालसपद्मकं च योज्या च भृङ्गी धनिका समांशा
चूर्णं सखर्जूरसितासमेतं घृतेन तद्वार्द्धबलप्रमाणम् २०

भद्मेत्प्रभाते पयसा मनुष्यो निष्क्वाथ्य पानं सघृतं विधेयम्
करोति तीव्राग्निसमं प्रकृष्टं कृशस्य पुष्टिं तनुतेऽपि नूनम् २१

क्लमभ्रमशोषविनाशनं स्यात्तृष्णातिलौल्यशमनं करोति
सरक्तपित्तं द्मयपाण्डुरोगं हलीमकं कामलमाशु नश्येत् २२

तण्डुलारक्तशालीनां भागद्वयेन धीमताम्
भृष्ट्वा तिलांश्च संकुटय्य तदर्द्धेन विमिश्रितान् २३

भृष्ट्वा तत्सममुद्गांश्च चैकोकृत्य तु साधयेत्
सिद्धां च कृशरां सम्यग्घृतेन सह भोजयेत् २४

एकाहान्तरितो यस्तु तीव्राग्निस्तस्य नश्यति २५

हरीतकी हरिहरतुल्यषड्गुणा चतुर्गुणा चतुर्विशालपिप्पली
हुताशनं हिंगुसैन्धवसंयुतं रसायनं कुरुनृपवह्निदीपनम् २६

दीप्यकाग्निर्हरीतकी विडङ्गो भागवृद्धि विनियोज्य चूर्णितम्
अत्यम्ल वेतञ्च तथा च कोलं दाडिमं तथा च तिन्तिडीकम् २७

समानि चेमानि च कर्षमात्रं कर्षाद्विभागेष्वितरे बलानि
जाजी वराङ्गं च सुवर्चलं च कणाशतैकं मरिचं तदर्द्धे २८

पलानि चत्वार्यपि शर्करायाः समं विचूर्ण्याथोदरान् प्रमार्ष्टिं
भद्मेद्यदेदं रुचिकृद्विबन्धं स प्लीहशूलं जयते सकासम् २९

श्वासं विनश्येद्धृदयामयघ्नं जिह्वाकण्ठामयशोधनं भवेत्
ग्राहग्रहण्यार्शविकारमन्दानलस्य सन्दीपनमेव चूर्णम् ३०

यवानिकाखरडविकाभिधानमरोचकानां शमनं प्रशस्तम्  ३१

यवागूः पञ्चकोलस्य कुलत्थाढक्यपूषकम्
मुद्गयूषेण वा सम्यग्भक्तानां भोजनं हितम्  ३२

सहिंगु त्र्यूषणाढ्यं च व्यञ्जनं सम्प्रशस्यते
अगस्तिघृतवच्छ्रेष्ठं भोजनारोचकेष्वपि  ३३

कारवेल्लं पटोलञ्च पलाराडुः सूरणं शठी
लवणं धान्यकं श्रेष्ठं प्रलेहश्च कटुत्रिकम्  ३४

शठी सर्षपवास्तुकं शतपुष्पा काञ्चनमाचिका
तुराडीरकस्य मूलानां शाकं श्रेष्ठं प्रशस्यते  ३५

गोधूमपोलिकाः श्रेष्टा भृष्टाङ्गारैररोचके
जाङ्गलानि च मांसानि भोजयेद्भिषगुत्तमः  ३६
इत्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने मन्दाग्निचिकित्सा नाम षष्ठोऽध्यायः
६

सप्तमोऽध्यायः

आत्रेय उवाच
व्यायामपाननिशिजागरणव्यवायशोकातिभारगतिधावनकश्रमेण
वैषम्यपानशयनेन च भोजनेन शीतेन वायुः कुपितः प्रकरोति बलम्  १

विष्टम्भिरूक्षयवमाषकलायमुद्गनिष्पावकास्त्रिपुटकोद्रवका मसूरः
गोधूमक्षुद्रकफरूक्षविभोजनेन चैतच्च पानमलरोधनमूत्ररोधैः  २

वायुस्त्वधोगतपथं प्रविरुह्य मूलं वातात्मको भवति चान्तरवह्निमांश्च
तस्मादिति प्रबलताकुपितः प्रकोष्ठे शूलं करोति गुद मार्गनिरोधितेऽपि  ३

गात्रेऽपि तोदविरतिर्मलिनातिदीना वातार्त्तिपीडितनरस्य महामते स्यात्  ४

क्रोधातपादनलसेवनहेतुना च शोकाद्भयार्त्तिगतिधावनधर्मयोगाम्
क्षाराम्लमद्यकटुकोष्णविदाहिरूक्षसौवीरशुष्कपललेखन राजिकाभिः  ५

सङ्कुप्यतेऽनिलसमीरितं तत्तु पित्तं शूलं करोति जठरे मनुजस्य तीव्रम्
तेनाङ्गदाहारतिधर्मतृषार्त्तिमूर्च्छा नाभ्यन्तरे दहति दोषः सपीततास्ये  ६

अव्यायामेऽस्निग्धसंसेवतेन लौल्याहारे चेक्षुतैलपयोभिः
अल्पाहारे निद्रया सेवनैस्तु योगैरेतैः कोपयेच्छ्लेष्मकस्तु  ७

माषातिशीतलपयोदधिभिःसुशीतैर्मत्स्यैस्त्वनूपपललैरतिसेवितैस्तु
श्लेष्मा भृशं शमयतेऽनलमाशु शूलं कोष्ठे करोति मनुजस्य विकारमुग्रम् ८

हृल्लासकासवमिजाड्यशिरोगुरुत्वं स्तैमित्य शीतलतनूरुचिबन्धनं च
भुक्तप्रसेकमधुरास्यं तथाभिरामं स्निग्धं मुखं भवति यस्य कफात्मकोऽसौ  ९

श्लेष्मा भवत्येव भवन्ति यस्य चिह्नानि स भवति च सशूलः
सपैत्तिकानीव भवन्ति यस्य तमाहुरजीर्णेऽपि नराः सशूलम्  १०

हृत्कण्ठपार्श्वे कफः पैत्तिकस्तु हृन्नाभिमध्ये कफपित्तशूलः
बस्तौ च नाभौ दधतःप्रदेशे विलोलमानः स तु वातपित्तात्  ११

एकोऽपि सुखसाध्योऽसौ द्वन्द्वः कष्टेन सिध्यति
त्रिदोषजस्त्वसाध्यस्तु बहूपद्रवसंयुतः  १२

निदानैः कुपितो वायुर्वर्त्तते जठरान्तरे
तेनेति संज्ञा दश स्युः शूलस्य परिगीयते  १३

त्रयो वातादिका ज्ञेया द्वन्द्वजास्तु पुनस्त्रयः
सामनिरामकौ द्वौ च शूलाश्चाष्टाविमे स्मृताः  १४

अजीर्णान्नवमः प्रोक्तो दशमः परिणामजः

एवं दशप्रकारेण शूलं सम्भवते नृणाम्  १५

भुक्तोपरि भवेद्यस्तु सोऽपि ज्ञेयः कफात्मकः
जीर्णेऽन्ने च भवेद्यस्तु स ज्ञेयः परिणामजः  १६

आध्मानमूर्ध्वं च विबन्धनं च जृम्भा तथा वेपथुमार्जनं च
उद्गीरणं स्निग्धमुखातिजिह्वा वातेन शूलं भजते विधिज्ञः  १७

दाहो रतिर्मोहस्तथैव तृष्णा कृच्छ्रेण मूत्रं कटुकास्थता च
स्वेदाति शोषो वदनं च पीतं पित्तात्मकोऽसौ प्रवदन्ति धीराः  १८

छर्दिस्तथा कासबलासमोह आलस्यतन्द्रा जडतातिशैत्यम्
कफात्मकं तद्भिषजां वरिष्ठ शूलं भवेद्द्वन्द्वजरोगसंज्ञम्  १९

त्रिभिस्तु दोषैस्तु त्रिदोषजः स्याद्रक्तेन चैकादश एवमुक्तः
पित्तात्मकानि प्रभवन्ति यस्य चिह्नानि यस्यासृगछर्दनं च  २०

शोषस्तृषा दाहस्तथैव कासः श्वासेन रक्तप्रभवोऽतिशूलः  २१

विना वातेन नो शूलं विना पित्तेन नो भ्रमः
न कफेन विना छर्दिर्न रक्तेन विना तमः  २२

इति शुलपरिज्ञानमतो वक्ष्यामि भेषजम्
येन शूलार्त्तिशमनं शूली संपद्यते सुखम्  २३

दृष्ट्वा शूलं लङ्घनं पाचनं च विरेचनं वान्तिसंस्वेदनं वा
क्षारं चूर्णं चार्पयेच्छूलशान्त्यै पानाभ्यङ्गाल्कासमाने मनुष्ये  २४

हिंगु नागरशठीसुवर्चलं दारुपौष्करघनापुनर्नवाः
क्वाथपानमिति शूलिनां हितं पाचनं जठरगुल्मिनामपि  २५

हिंगु पौष्करशठीसुवर्चलं क्वाथमेवमपि शूलिनां हितम्

वातशूलशमनाय शस्यते पाचनं निगदितं च वर्त्तते २६

सिन्धूत्थहिंगु रुचकं च शठी यवानी पथ्यायवक्षारसमं विचूर्णम्
देयं सुखोष्णेन निहन्ति शूलं वातात्मकं वाप्यचिरेण शूलम् २७

हिंगु सौवर्चलं पथ्या यवानी सपुनर्नवा
बलैरण्डो बृहत्यौ द्वे तुवरं त्र्यूषणान्वितम् २८

क्षारसौवर्चलोपेतं क्वाथो वा चूर्णितस्तथा
सद्यो वातात्मकं शूलं हन्ति सद्यो विषूचिकाम् २९

तुम्बुरुपौष्करहिंगु यवानी त्र्यूषञ्च वा त्रिबृहतीगुणेन
युक्तमिदं लवणाष्टकचूर्णं भवति शूलनिवारणक्षमम् ३०

क्वाथो निहन्ति मरुतोद्भवशूलसङ्घानेरण्डनागरसुवर्चलरामठेन
पथ्यावचेन्द्रयवनागरतोययुक्तं हिंगु सुवर्चलयुतं च निहन्ति शूलम् ३१

हिंगु नागरषड्ग्रन्था यवानी उभया त्रिवृत्
विडङ्गं दारु चव्यञ्च तुम्बुरुकुष्ठमुस्तकाः ३२

हपुषा कलशी रास्ना वत्सका सदुरालभा
सितारवी बृहत्यौ च लाङ्गली पञ्चजीरकम् ३३

पुष्करं तिन्तिडीकं च वृक्षाम्लं चाम्लवेतसम्
द्वौ क्षारौ पञ्चलवणं समं चैकत्र मिश्रयेत् ३४

मूत्रेण भावनाञ्चैकां दत्वा छायाविशोषिताम्
बीजपूरक तोयेन भावयेच्च दिनत्रयम् ३५

बिडालपदिकां मात्रां युञ्जीत शूलशान्तये
वातेनोष्णोदकेनापि सितशर्करयान्वितः ३६

त्रिफला क्वाथो मद्येन श्लेष्मरोगे प्रशस्यते
शूलानाहविबन्धानां मन्दाग्नौ गुल्मविद्रधीन् ३७

प्लीहोदराणाञ्च पाण्डुज्वरिणां च विशेषतः
निहन्ति देहसङ्घातं मेघवृन्दं मरुद्यथा ३८

धात्रीफलं लोहरजश्च पथ्या त्र्यूषं समांशेन विभाव्य तं तु
रसेन वा दाडिममातुलुङ्गयाश्चूर्णं सिताढ्यं च सपित्तशूले ३९

बिडालकं दाडिमपूतनां च धात्रीसमेतं विदधीत चूर्णम्
तन्मातुलुङ्गस्य रसेन भावितं सपित्तशूलशमनाय भक्षेत् ४०

जीवन्त्याद्यं घृतं पाने क्षीरं वापि सितान्वितम्
कर्त्तव्यं रेचनं नित्यं पित्तशूलनिवारणम् ४१

शिशिरसरसतोयागाहनं चन्दनानि विशदपुटितमध्ये स्वापनं वै निशासु
कनकरजतकांस्याम्भोजहैमं तुषारं कृतमिति विधिना वै पैत्तिके मूलहेतोः
४२

सितशाल्योद्भवा लाजाः सितामधुयुतं पयः
दाहं पित्तज्वरं छर्दि सद्यः शूलं निहन्ति च ४३

जाङ्गलानि च मांसानि भोजनार्थे प्रशस्यते
घृतं क्षीरं समधुरं प्रशस्तं पित्तशूलिनाम् ४४

लङ्घनं वमनं चैव पाचनं श्लेष्मशूलिनाम्
न घनातिमधुराणि शयनं च विधेयकम् ४५

बिल्वाग्निमन्थवृषचित्रकनागराश्च एरण्डहिंगु सहसैन्धवकं समाशम्
क्वाथो निहन्ति कफजोद्भवसद्यः शूलं सद्यो निहन्ति जठरानलवर्द्धनं च
४६

मातुलुङ्गरसं धात्रीरसं सैन्धवसंयुतम्
शोभाञ्जनकमूलस्य रसं च मरिचान्वितम्  ४७

सक्षारमधुनोपेतं श्लेष्मशूलनिवारणम्
कृतक्षयोद्भवं कासं नाशयत्याश्वसंशयम्  ४८

तुवरं ग्रन्थिकैरण्डा व्योषं पथ्याजमोदकम्
सक्षारलवणोपेतं चूर्णं शूले कफात्मके  ४९

एरण्डबिल्वबृहतीद्वयमातुलुङ्गं पाषाणभित्त्रिकटुमूलकृतः कषायः
सक्षारहिंगुलवणोपेततैलमिश्रं श्रोण्यंसमेढ्रहृदयस्तनकुक्षिदेयम्  ५०

पटोलारिष्टपत्राणि त्रिफलासंयुतानि च
क्वाथमधुयुतं पानं शूले पैत्ते समीरणे  ५१

पित्तज्वरतृषादाहरक्तपित्तनिवारणम्  ५२

दुरालभा पर्पटकं च विश्वा पटोलनिम्बाम्बुदतिन्तिडीकम्
सशर्करं कल्कमिदं प्रयोज्यं सपित्तवातोद्भवशूलशान्त्यै  ५३

सौवर्चलं समशठी सहनागरा च शुण्ठीयुतेन क्वथितेन जलेन चूर्णम्
पीतं निहन्ति मरुतायुतश्लैष्मिकाणां पार्श्वातिशूलजठरानलहृत्प्रशस्तम्  ५४

दारु नागरकं वासा हिंगु सौवर्चलान्वितम्
क्वाथो वातकफे शूले आमे जीर्णे विबन्धके  ५५

पलाशकदलीवासापामार्गकोकिलाह्वयम्
गोमूत्रेण श्रितं तत्तु हिंगुनागरसंयुतम्  ५६

हितं त्रिदोषजे शूले कामलाविड्विबन्धके
गुल्मोदराणां शमनं मन्दाग्नीनां नियच्छति  ५७

एक एव कुबेराक्षः सर्व शूलापहारकः
किं पुनः स त्रिभिर्युक्तः पथ्यारुचिकरामठैः ५८

शङ्खक्षारं च लवणं हिंगुव्योषसमन्वितम्
उष्णोदकेन तत्पीतं हन्ति शूलं त्रिदोषजम् ५९

लङ्घनं वमनं चैव विरेकश्चानुवासनम्
निरूहो बस्तिकर्माणि परिणामे त्रिदोषजे ६०

चित्रकं त्रिवृता दन्तो विडङ्गं कटुकत्रयम्
समं चूर्णं गुडेनाथ कारयेन्मोदकान्सुधीः ६१

भक्षयेत्प्रातरुत्थाय पश्चादुष्णोदकं पिबेत्
परिणामोद्भवं शूलं हन्ति शूलं नरस्य च ६२

यवानी हिंगु सिन्धूत्थक्षारं सौवर्चलाभया
सुराभाण्डेन पातव्या परिणामे त्रिदोषजे ६३

हिंगुव्योषवचाजमोदहपुषा पथ्या यवानी शठी
जाजीपिप्पलिमूलदाडिमवृक्षीचव्याग्निकं तिन्तिडी ।
तस्माच्चाम्लसुवर्चलेपि च यवक्षारं तथा सर्जिका
सिन्धूत्थं विडचूर्णकं समकृतं स्याद्बीजपूरे रसे ६४

कुर्याच्चूर्णगुटीं समक्षफलदामक्षप्रमाणामिमां
कल्को वातविकारिणां प्रददतः शूलार्शसत्प्लीहकान् ।
कासानाहविबन्धमेहहृदयशूलं निहन्त्याशुवै ६५

एष हिंग्वादिको नाम सर्वशूलार्त्तिनाशनः
सर्ववातविकारघ्नः सर्वक्षयनिवारणः ६६

अतीसारस्तृषा मूर्च्छा अनाहो गौरवोऽरुचिः

श्वासकासौ वमिर्हिक्का शूलस्यौपद्रवा दश ६७

शूलं सोपद्रवं तृष्णां भिषग्दूरे परित्यजेत्
अनुपद्रवे क्रिया प्रोक्ता भिषजां सिद्धिमिच्छता ६८

वर्जयेद्द्विदलं शूली तथा सघनशीतलम्
पिच्छलं च दधि चैव दिवानिद्रां च वर्जयेत् ६९

शालिषष्टिकसिन्धूत्थहिंगुसौवीरकं तथा
सुरा वा गुडशुण्ठी वा पाने श्रेष्ठा भिषग्वर ७०

शतपुष्पावास्तुकं च हितं प्रोक्तं प्रशस्यते ७१

एणतित्तिरिलावाश्च क्रौञ्चशशकसारसाः
एषां मांसानि शस्तानि कथितानि भिषग्वर ७२

इति आत्रेय भाषितेहारीतोत्तरे तृतीयस्थाने शूलचिकित्सा नाम
सप्तमोऽध्यायः ७

अष्टमोऽध्यायः

आत्रेय उवाच
शृणु पुत्र प्रवक्ष्यामि पाण्डुरोग महागदम्
पञ्चैव पाण्डुरोगास्ते सम्भवन्तीह मानुषे १

वातिकः पैत्तिकश्चैव श्लैष्मिकः सान्निपातिकः
पञ्चमो रूक्षणः प्रोक्तो वक्ष्ये चैषां तु सम्भवम् २

दीर्घाध्वन्ये पीडितो वा ज्वरेण रक्तस्रावेपीडितो वा व्रणेन
चिन्तायासाद्रोधनाद्धे मनुष्य अयं पाण्डुर्जायते सेवते यः ३

क्षारं चाम्लं कल्यमैरेयसेवा अव्यायामान्मैथुनातिश्रमेणनिद्राणाशेनातिनिद्रा-
दिवापियोगैश्चैतैर्मृत्तिकाभक्षणेन ४

पथि शिथिलशरीरे रोगसम्पीडिते वा लवणकटुकषायासेवनाम्लेन मृद्भिः
अतिसुरसमजस्रं सेवनातिक्रमेण नयति रुधिरशोषं तेन वै पाण्डुरोगम् ५

तेनाक्षकूटे श्वयथुः शरीरे पाण्डुत्वमायाति च पीतमूत्रः
निष्ठीवते त्वक् प्रविदीर्यते च सञ्जायते तस्य पुरःसराणि ६

तोदः परुषत्वशिरोगुरुत्वं त्वङ्मूत्रनेत्रे नखे पीतता स्यात्
वातात्मकं तं मनुजस्य विद्धि लिङ्गरुपेतोऽनिलपाण्डुरोगः ७

आमत्वपीतत्वकरो हि लोके बिभर्त्ति शोषं कटुतास्यतां च
मन्दज्वरो वै तृषामोहशोफः पीतच्छविः पित्तभवो हि पाण्डुः ८

तन्द्रालुशोफकफकासयुक्त आलस्यप्रस्वेदगुरुत्वमेवम्
सञ्जायते तस्य कफात्मकोऽसौ नरस्य पाण्डुत्वभवो विकारः ९

तन्द्रालस्यं श्वयथुवमथू कासहृल्लासशोषा विड्भेदालस्यं परुष नयने
सज्वरो वै क्षुधार्त्तः ।
मोहतृष्णाक्लममथ नरस्याशु पश्येत्सुदूरं त्याज्यो वैद्यैर्निपुणमतिभिः
सन्निपातोत्थपाण्डुः १०

मृत्तिकाभक्षणेनाथ शृणु पुत्र गदो महान्
पाण्डुरोगो गरिष्ठोऽपि भवेद्धातुक्षयङ्करः ११

मृद्भक्षणाच्चैव मलं प्रकीर्य स्त्रोतांसि तुष्यन्ति तु मृत्तिकायाः
तेनैव नासृक् परिवर्त्तयन्ति न तर्पयन्ति वपुषं रसेन १२

क्षारात्कषायान्मधुरस्य पानात्स कोपत्याशु नरस्य मृत्सा
श्लेष्मप्रकोपान्मधुरान्करोति मृत्सा न जग्धा हितकारिणी स्यात् १३

विकृता एव बलिष्ठा मारुताद्यास्त्रयस्तु द्युतिबलजीवनाशां नाशयन्त्याशु
दोषाः ।

भवति विकलमेवं पाण्डुरोगे शरीरं हरति जठरवह्निं मृत्तिकाभक्षणेन १४

गोमूत्रे लोहं मतिमान्स्थापयेत्सप्तरात्रकम्
तस्माच्चूर्णं तु मधुना देयं पाण्ड्वामयापहम् १५

त्र्यूषणं त्रिफला मुस्ता विडङ्ग चित्रकं समम् १६

भागमेकं लोहचूर्णमपि वेक्षुरसेन भावयेत्
सप्तकाहमलोपि खल्वितं पुनरपि प्रवरं स्यात् १७

शीलितं तु मधुनापि घृतेन पाण्डुरोगहृदयामयापहम्
कामलार्शोहलीमकहारि कथितं सुमतिभिश्च पण्डितैः १८

त्र्यूषणं त्रिफलया सह चित्रकं मेघचव्यसुरदारुमाक्षिकम्
ग्रन्थिकं च शिखिभृङ्गराजकं योजयेत्पलिकभागिकानिमान् १९

चूर्णितादि्द्वगुणमेव योजयेल्लोहचूर्णमपि कज्जलप्रभम्
अष्टभागसममूत्रकल्पितं पाचितं पुनरहो बलप्रदम् २०

सेवयेद्बलमुपक्रमं तथा तत्र संयुतमिहास्ति शोभनम्
नाशयेच्च कफकामलान्कृमीन्पाण्डुकुष्ठगुदजान्हलीमकम् २१

पुनर्नवाव्योषत्रिवृत्सुराह्वयं निशाह्वयं चव्यफलत्रयं तथा
घना यवा तिक्तवरोहिणी समा द्विभागिकं लोहरजो विमिश्रयेत् २२

गवां पयो वा द्विगुणं वियोज्यं दार्व्या प्रलेपं प्रणिधाय धीमान्
छायाविशुष्का गुटिका विधेया क्षौद्रेण मूत्रेण गवां च भक्षयेत् २३

ज्ञात्वा बलं रोगबलं नरस्य पाण्ड्वामये कामलसर्वमेहे
गुल्मोदराजीर्णविषूचिकानां शोफातिसारग्रहणीविबन्धान्
शूलक्रिमीनर्शविकारहेतोः २४

पञ्चकोलककटुत्रिकं घना देवदारुकृमिशत्रुकोलकम्
एष भागसहितो वियोजितो मिश्रयेत्तदनु चायसं रजः २५

तत्र चाष्टगुणमूत्रमध्यतः पाचयेद्भवति येन लेपिका
कारयेद्बदरमात्रया पुनश्छाययापि पिषितञ्च शोषणम् २६

कारयेत्सुरभिमथितेन च पानकञ्च शमयेत्सकामलम्
पाण्डुमर्शमतिसारमन्दभुक् शोषमेहगुदजान् क्रिमीनपि २७

धात्रीफलानां रसप्रस्थमेकं प्रस्थं तथा चेक्षुरसं विदध्यात्
प्रस्थं तु कूष्माण्डरसप्रदिष्टमार्कं रसं प्रस्थविमिश्रमेकम् २८

एकीकृतं मन्दहुताशनेन पाच्यं भवेद्व्यापदशेषमेति
विमिश्रयेदौषधसङ्घमेतत्पलैकमात्रं विपचेच्च पश्चात् २९

भृङ्गी सुराह्वं शतपुष्पधान्यं सुगन्धशुण्ठी मधुकं विशाला
सपिप्पलीकं सकटुत्रयं च विडङ्गमुस्ता हपुषादलानि ३०

भूरिहरिद्राकटुरोहिणीनां दुरालभापौष्करवत्सकानाम्
कुष्ठाजमोदासुरसा दलानि चूर्णं त्वमीषां विनियोजनीयम् ३१

गुडं पुराणं द्विगुणं तु मध्ये गोघृतेन वटिकां विबन्धयेत्
भक्षणाज्जयतिकामलार्शसं पाण्डुरोगमतिदारुणज्वरान् ३२

शोफशोषग्रहणी विनिघ्नति वातातिसारक्षयकासगुल्मान् ३३

गोधूमशालियवषष्टिकमुद्गकानां श्यामाढकीघृतयुतं पयसा सतक्रम्
गाण्डीववास्तुकमथो शतपुष्पवर्त्तापथ्यं हितं निगदितं मनुजस्य पाण्डौ ३४

जाङ्गलानि च मांसानि भोजने च प्रशस्यते ३५

तिक्तानि रूक्षाणि च कटुकानि तीव्राणि दाहान्यपि काञ्जिकानि

सुराम्लसौवीरकबीजपूरान् तैलानि वर्ज्यानि च पाण्डुरोगे  ३६
इत्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने पाण्डुरोगचिकित्सा नाम
अष्टमोऽध्यायः  ८

नवमोऽध्यायः

आत्रेय उवाच
शृणु च भिषग्वरिष्ठ व्याधिर्घोरो नराणां भवति विहितचेष्टो वातलप्राणिनां वै
।
चिरनिचयकरोऽयं प्राकृतैः कर्मपाकैरिह परिभवकारी मानुषस्य क्षयोऽयम्
१

देवानां प्रकरोति भङ्गमथवा भ्रूणस्य सन्तापनं
गोपृथ्वीधरविप्रबालहननमारामविध्वंसनम्  ।
सोऽयं स्थानविनाशनं च कुरुते स्त्रीणां वधं यो नरस्
तस्यैतैर्गुरुकर्मभिः क्षयगदो देहार्थहारी महान्  २

देवानां दहतो धनं च दहतो भ्रूणप्रपातेऽपि च
देवत्वं हरती विषं च ददत आरामकं निघ्नतः  ।
तेनासौ नियमेन सम्भवति वै नृणां च तीव्रा रुजा
धातूनां क्षयकारिणी च मनुजस्यात्मापहा दारुणा  ३
क्षयो दशविधश्चैव विज्ञातव्यो भिषग्वरैः  ४

श्रमाद्वाभाराद्वाविषमशयनैर्दीर्घचलनैरजीर्णे भोज्याद्वा सुरतरतिसेवापरतया  ।
ज्वरेणातिक्रान्ताद्विषमशयनाच्छीतलतरैः क्षयं याति श्लेष्मा पवनमथ पितञ्च
तनुषु  ५

रोगाक्रान्ताद्विषमशयनात्तस्य मन्दज्वराद्वा
श्लेष्मापित्तञ्च मरुदथवा याति देहक्षयं वा  ।
रसरक्तमांसमेदश्चास्थि मज्जा च शुक्रमिति सप्त
एवं दशविधा ज्ञेयाः क्षया भवन्ति नृणां शरीरेषु  ६

पुनरपि लक्षणमेषां वक्ष्यते ते शृणु त्वम्  ७

अतिस्वेदातिघर्मेण चिन्ताशोषभयादिना
वाताद्यैः सेवितैश्चापि जायते मारुतक्षयः  ८

तेन तन्द्राङ्गदाहश्च पिपासारुचिवेपथुः
तमः क्लमो भ्रमश्चैव भवेच्च मारुतक्षये  ९

तस्मादनूपानि सेव्यानि रसानि पललानि च
रसोनादिककल्कञ्च सेवयेद्वातनाशने  १०

पित्तक्षयेऽग्निमान्द्यं च जायतेऽरुचिजाड्यता
कासहृल्लासशोफश्च जायते मन्दचेष्टता  ११

स्वेदाभ्यङ्गान्नपानानि दीपनानि प्रयोजयेत्
जाङ्गलानि रसान्नानि सेवयेत्पित्तकृत्क्षये  १२

व्यायामे च व्यवाये च रूक्षान्नाहारसेवनैः
सन्तापक्रोधनैश्चैव जायते कफसम्भवः  १३

तेन दाहोऽथवा पाण्डुः शोफो निःश्वसनं भ्रमः
विनिद्रता क्षुत्तृषा च स्त्रीसङ्गेनापि नन्दति  १४

तस्य शीतान्नपानानि कन्दशाकादिकै रसैः
अनूपैर्दधिदुग्धैर्वा सेवनं च समीहितम्  १५

त्रिभिर्दोषैः क्षयं प्राप्तैस्तदा हि मरणं ध्रुवम्
तस्य क्रिया प्रयोक्तव्या साधारणा महामते  १६

अथ धातुक्षयं वक्ष्ये हारीत शृणु साम्प्रतम्
रसरक्तमांसमेदाः प्रत्येकं क्षयलक्षणम्  १७

रसक्षयेऽतिशोषश्च मन्दाग्नित्वं च वेपथुः
शिरोरुग्मन्दचेष्टत्वं जायते च क्लमभ्रमौ  १८

रक्तक्षये क्षयः पाण्डुर्मन्दचेष्टो भवेन्नरः
श्वासो निष्ठीवनं शोषो मन्दाग्नित्वं च जायते  १९

मांसक्षयेऽतिकृशता चेष्टनं चाङ्गभङ्गता
निद्रानाशोऽतिनिद्रास्य विसंज्ञो लघुविक्रमः  २०

मेदःक्षये मन्दबलो विसंज्ञता चाङ्गभङ्गो गमनं परुषता
श्वासातिकासारुचिताग्निमान्द्यं विशोषस्तेन तनुशोषो जायते  २१

अस्थिक्षये स्यादतिमन्दचेष्टता मन्दवीर्य इति मेदसः क्षये
विसंज्ञता कृशता च कम्पना अङ्गभङ्गवमनं परुषता  २२

शोषदोषसदनं च शोफिता विकम्पनं शोषरुषश्च जायते
भिषग्वर त्वं परिवेद लक्षणं मज्जाक्षये कम्पनमेव वास्ति  २३

भ्रमः क्लमः स्यादतिमन्दचेष्टः शोफो निशाजागरणं च तन्द्रा
मन्दज्वरः शोषसमो मनुष्ये शुक्रक्षये चाङ्गविचेष्टितानि  २४

रूक्षभ्रमकम्पनशोषरोषस्त्रीद्वेषितादीनि
विरूपता च वैकल्यं सन्धिषु जातशोषः  २५

इदानीं सम्प्रवक्ष्यामि भेषजानि यथाक्रमम्
स्नेहनं रूक्षणं चैव तथा विम्लापनं हितम्  २६

जाङ्गलानि च मांसानि भोजनानि च सेवयत्
गुडूची शृङ्गवेरञ्च यवानीक्वथितं जलम्  २७

मरिचैः क्वथितं दुग्धं पाने रात्रौ प्रशस्यते

तेन रसानां वृद्धिः स्याच्छीघ्रं तस्माद्विमुच्यते २८

रसानां वृद्धिकरणं गोधूमयवशालीनाम्
कथितानि भिषक्छ्रेष्ठैर्जाङ्गलानि विशेषतः २९

घृतदुग्धसिताक्षौद्रमरीचानि च पिप्पली
पानं शस्तं मनुष्याणां रक्तवृद्धिकरं परम् ३०

अनूपानि च धान्यानि लघुनामानि कल्पयेत्
कल्यांश्च घृतदुग्धादीन्सेवयेन्मधुराणि च ३१

रसाश्च जाङ्गलानि स्युः सेवनार्थे भिषग्वर ३२

सितोपलादिकं चूर्णमजाक्षीरं सकोलकम्
हितं पानं क्षये चैव कल्यमप्रातराशनम् ३३

पक्वानि घृतशस्तानि क्षीराणि विविधानि च
चन्दनानि च द्राक्षादिचूर्णानि च भिषग्वर ३४

जाङ्गलानि च सर्वाणि सेवनीयानि पुत्रक
अन्नानि च मधुराणि सर्वाणि च प्रयोजयेत् ३५

शुक्रक्षये प्रपाकानि रसानि च विशेषतः
नवनीतं तथा क्षीरं मधुराणि च सेवयेत् ३६

कर्कटीमूलपयसा विदारीकन्दशाल्मली
सिताढ्यपानं च हितं शस्यन्ते मधुराणि च ३७

शुक्रक्षयवृद्धिकरणमिदानीं चूर्णानि वक्ष्यन्ते ३८

बला विदारी लघुपञ्चमूली पञ्चैव क्षीरद्रुमत्वक् प्रयोज्या
पुनर्नवा मेघतुगायुतं स्यात्सञ्जीवनीयैर्मधुकैः समांशैः ३९

अक्षप्रमाणानि समानि तानि सर्वाणि चैतानि विचूर्णयित्वा
विमिश्रयेत्तत्र कणाशतानि यवान्न गोधूमयवांश्च पिष्ट्वा ४०

तुगासमांशं सिततण्डुलानां सेयं सुभृङ्गारकमिश्रितं तु
प्राकर्णकार्द्धेन वियोजनीयं सर्वांशकेनापि सिता प्रयोज्या ४१

विभावयेच्चामलकीरसेन वारत्रयं गोपयसा विभाव्य
ततोऽस्य सर्वैश्च सशर्करैर्वा घृतेन चैवं पुनरेव भाव्यम् ४२

तं भक्षयेत्क्षौद्रयुतं पलार्द्धं जीर्णे च भोज्यं कटुकाम्लवर्जम्
क्षीरं घृतं वा सितशर्करां वा यवान्नगोधूमकशालिभक्ष्यान् ४३

ज्ञात्वाग्निपाकं जठरे नरस्य देयो विधिज्ञैः क्षयरोगशान्त्यै
पथ्यक्षये श्रान्तचिराभितापसम्पीडितानां च तथा शिरोऽर्त्तौ ४४

पित्तातुराणां रुधिरक्षयाणां श्रमाध्वंसम्पीडितकामलानाम्
श्वासातुराणां मधुमेहिनां च क्षीणेन्द्रियाणां बलकारि शस्तम् ४५

गर्भो गृहीतश्च यया स्त्रिया च तस्याः प्रशस्तं तु बलादिचूर्णम् ४६
इति बलादिचूर्णम्

बिल्वाग्निमन्थशोणाकाः काश्मरी पाटली तथा
शालिपर्णी पृश्निपर्णी श्वदंष्ट्रा बृहतीद्वयम् ४७

भृङ्गी शीता चामलकी जयन्ती पुष्कराह्वयम्
द्राक्षाभयामृता मेदा चन्दनागुरुपद्मकम् ४८

बलाह्वयास्तु कर्षे द्वे जीवकर्षभावुभौ
काकोली क्षीरकाकोली विदार्याः कन्दमांसकम् ४९

सर्वेषां पलिका मात्रा योजयेद्भिषजां वरः

धात्री फलं पञ्चशतं सुपक्वरससंयुतम् ५०

जलद्रोणे विपक्तव्यं चतुर्भागे च शोषितम्
तथा निर्वाप्य मतिमान् कलकानि समुद्धरेत् ५१

तत्क्वाथं कल्कयेत्तावद्यावद्दर्वीप्रलेपकः
पुनस्तैलेन वाज्येन पक्त्वा चामलकीफलान् ५२

पाचिताश्चूर्णितान्सर्वान्समशर्करयायुतान्
चतुष्पलातुगात्तीरैर्योजयेद्भिषजां वरः ५३

पिप्पलीनां सहस्रैकं त्वगेलापत्रकं तथा
एषां द्विपलिकां मात्रां विदध्यात्तत्र सत्तमः ५४

सर्वं प्राक्कथिते लेहे योजयेच्च विचूर्णितम्
आदरेण समं लिह्यान्नराणां च रसायनम् ५५

श्वासकासत्तयपाण्डुकामलानां विशोषणम्
त्तीणत्ततानां बालानां वृद्धानां देहरत्तणम् ५६

स्वरभङ्गपिपासानां हृद्रोगे पित्तशोणितम्
शुक्रदोषं शिरोरोग्रं पीनसं चापकर्षति ५७

जीर्णज्वरञ्च मन्दाग्निं कुष्ठं दुष्टं भगन्दरम्
मेहं कृच्छ्राश्मरीं हन्ति तथा रोचनवारणम् ५८

हृद्रोगशूलमानाहं नाशयत्यविसंशयम्
वन्ध्यानां पुत्रजननं वृद्धानामल्परेतसाम् ५९

षण्ढोऽपि जायते चैव सदा ऋतुकरः परः
मेधा स्मृती तथा तेजो वर्द्धयत्याशु निश्चितम् ६०

सौख्यसौभाग्यदर्शी च वृद्धोऽपि तरुणायते
क्षयरोगविनाशाय कथितं चात्रिणा महत्  ६१

च्यवनप्राशनं नाम कृष्णात्रेयविभाषितम्  ६२
इति च्यवनप्राशनं नामावलेहः

भार्ङ्गीपुष्करमूलचित्रककणामूलं गजाह्वा शठी
शङ्खाह्वादशमूलचित्रकबलायासात्मगुप्तास्तथा ।
एतेषां द्विपलांशकी भिषग्वर प्रोक्ता च पञ्चाढके
पथ्यानां शतकं विपाच्य बहुधा मन्दाग्निना सन्ततम्  ६३

निर्वाप्य पुनरेव पूतसरसं चोद्धृत्य पथ्याशतं
संशुष्यामतिशीतले सुभवनक्वाथः प्रशस्तः पुनः ।
दत्वा जीर्णं गुडस्य चैकतुलया कुडवञ्च क्षौद्रं घृतं
स्नेहस्यार्द्धमथाक्षकेण मगधा योज्यं शतं पञ्चकम्  ६४

चूर्णं तत्र निधापयेत्पुनरपि सङ्घट्टयेदुच्चकं
पथ्ये द्वे मधुना सहातिहितकृत्सर्वामयच्छेदनः ।
पाण्डुकासहलीमकगुदरुजो हृद्रोगहिक्काभ्रमान्
हन्यात्पीनसमेहपित्तरक्तकुष्ठं च ग्रहण्यामयम्  ६५

पुष्पं चैव तनोति शोफ मरुचिगुल्मार्त्तिराजक्षय-
मेहानाहविबन्धरोगशमनं क्षीणेन्द्रियाणां हितम् ।
मन्दाग्नेः प्रशमं करोति वडवातुल्योऽरुचिबन्धको
नाशं वा विदधाति देहसुखदागस्तिप्रणीताभया  ६६

बलाह्वयं गोक्षुरको बृहत्यौ निष्क्वाथ्य दुग्धेन कणासमेतम् ।
पानं हितं स्यान्मधुना सिताढ्यं विनाशनं कामलकं क्षयं वा ।
मेहस्य तृष्णाशय नाशकारि क्षीणेन्द्रियाणां बलमातनोति  ६७

पिप्पलीं वर्द्धमानं वा कारयेद्दुग्धसर्पिषा

आद्यः पञ्च पुनः सप्त पुनरेव नव क्रमात्  ६८

एकादशस्त्रयोदशः पञ्चदशस्तथा सप्तदशः स्मृतः
एकोनविंश एकविंशः पृथक्पृथग्यथाक्रमम्  ६९

एवं क्रमेण वृद्धिः स्यात्कारयेच्छतमात्रया
ततः क्रमेण पुनः पश्चाद्यावच्छेषं च पञ्चकम्  ७०

भोजयेत् षष्टिकान्नं तु मुद्गेन सर्पिषा युतम्
एवं बालश्च वृद्धश्च नरो नागबलो भवेत्  ७१

पिप्पली वर्द्धमाना तु ज्वरे जीर्णे प्रशस्यते
मन्दाग्नौ पीतमेवाथ गुदजे वा तथा पुनः  ७२
इति पिप्पलीवर्द्धमानम्

द्वे पले मार्कवं धातु माक्षिकं च पुनर्नवा
तुगा पृक्का शालिपर्णी वासकं च दुरालभा  ७३

चूर्णार्द्धेन समं योज्यं त्रिगन्धं मरिचानि च
तालीसं मगधा चैव तदर्द्धेन शिलोद्भवम्  ७४

शिलाभेदं तदर्द्धेन सर्वं चैकत्र मिश्रयेत्
समेन तिलचूर्णं तु शर्करायाः समायुतम्  ७५

भक्षयेत्क्षीरपानं वा शस्यते घृतसंयुतम्
तेन क्षयो राजयक्ष्मा कामला च विनश्यति  ७६

अपस्मारं जयत्याशु बलवीर्याधिको भवेत्
शाम्यन्ति च महारोगाः शुक्राढ्यो जायते नरः  ७७
इति शिलाजतुचूर्णम्

जीवन्तिकावत्सकयष्टिकानां सपौष्करं गोक्षुरकं बले द्वे
नीलोत्पलं चामलकी यवासं सत्रायमाणा मगधा च कुष्ठम् ७८

द्राक्षामलक्या रसप्रस्थमेकं प्रस्थद्वयं छागलकं पयश्च
प्रस्थं दधिषु पचेद्धृतं वह्निवातं पाने प्रशस्तमेव भोज्ये ७९

नस्ये च बस्तावपि योजयेत्तद्विनाशमेत्याशु च राजयक्ष्मा
हलीमकः कामलपाण्डुरोगो मूर्च्छा भ्रमः कम्पशिरोऽर्त्तिशूलम् ८०

महाश्मरी वा गुदकीलकुष्ठं शिरोगतो नाशमुपैति रोगः
तस्य प्रदानेन वियोजितेन पानेन पाण्ड्वामयराजयक्ष्मा ८१

नाशं शमं याति हलीमको वा बस्तिप्रदानेन गुदोद्भवाश्च
रोगी विनाशं समुपैति पुंसां विसर्पविस्फोटकप्रोक्षणेन ८२

कणा पलाशः पञ्चगुणं पयश्च आद्यं घृतं वै विपचेत्समांशम्
पानेऽथवा भोजनके प्रशस्तं देयं च राजक्षयनाशहेतोः ८३

पञ्चकोलं यवाग्रञ्च क्षीरं दध्ना घृतं पुनः
समांशेन तु योज्यानि भार्ङ्गी कुष्ठं तु पौष्करम् ८४

शतं तत्र हरीतक्या जले चैव चतुर्गुणे
क्वाथं चैकत्रयं योज्यं क्वाथयेन्मृदुवह्निना ८५

मृदुपाकं घृतं सिद्धं पाने नस्ये च बस्तिषु
गुणाधिक्यं भवेन्नृणां पाण्डुरोगे हलीमके ८६

राजयक्ष्मणि क्षये चैव शस्तं चोक्तं भिषग्वर ८७

यष्टी बला गुडूची च पञ्चमूलं समांशकम्
क्वाथेन सदृशं धात्रीरसं चेक्षुरसं तथा ८८

विदार्याश्च रसं चैव घृतं च समभागिकम्
क्षीरं दधिसमं चात्र नवनीतं तु तत्समम् ८९

द्राक्षातालीससंयुक्तं यथालाभेन योजयेत्
सिद्धं घृतं च पानाय नस्ये बस्ता प्रदापयेत् ९०

जयति राजयक्ष्माणं पाण्डुरोगं सुदारुणम्
हलीमकं चार्शसं च रक्तपित्तनिवारणम् ९१

लेपेन दुष्टवैसर्पपित्तदग्धव्रणापहम् ९२

बला श्वदंष्ट्रा बृहतीद्वयं च पर्णीद्वयं गोक्षुरकं स्थिरा च
पटोलनिम्बस्य दलानि मुस्तं सत्रायमाणा च दुरालभा च ९३

कृत्वा कषायं च यदावशेषं पूतीकृते चूर्णमिदं प्रयुंज्यात्
द्राक्षा शठी पुष्करमूलधात्री तमालकी दुग्धसमं कषायम् ९४

सर्पिःप्रयुक्तं नवनीतकं च सर्पिस्तदर्द्धेन नियोजनीयम्
सिद्धं घृतं पानमथैव बस्तौ नस्ये तथाभ्यञ्जनभोजनेन ९५

जघन्यकासक्षयकामलानां राजक्षये क्षीणबलेन्द्रियाणाम्
शतेषु शोफेषु व्रणेषु शस्तं शिरोऽर्त्तिपार्श्वार्त्तिगुदामयघ्नम् ९६

चन्दनं सरलं दारु यष्ट्येला वालकं शठी
नलशैलेयकं पृक्कापद्मकं वनकेसरम् ९७

कङ्कोलकं मुरामांसी शैरियं द्विहरीतकी
रेणुकात्वक्कुङ्कुमञ्च सारिवे द्वे तिक्तागुरुः ९८

नलिकाबले तथा द्राक्षा कषायं सुपरिस्नुतम्
तैलमस्तु तथा लाजा रसेन समभागिकम् ९९

मन्दाग्निना पचेत्तैलं सिद्धं पाने च बस्तिषु
नस्ये चाभ्यञ्जने चैव योजयेत्तद्भिषग्वरः १००

हन्ति पाण्डुक्षयं कासं ग्रहघ्नं बलवर्णकृत्
मन्दज्वरमपस्मारकुष्ठ पामाहरं पुनः १०१

करोति बलपुष्ट्योजो मेधाप्रज्ञायुर्वर्द्धनम्
रूपसौभाग्यदं प्रोक्तं सर्वभूतयशस्करम् १०२

स्वामिभार्याभिगमने गुरुपत्न्यभिलाषणात्
राजस्वहेमचौर्याद्वा राजयक्ष्मा भवेद्गदः १०३

अथवा दुष्टरोगेण जायते शृणु पुत्रक
चतुर्भिर्हेतुभिर्यक्ष्मा जायते शृणु साम्प्रतम् १०४

व्यायामयानसुरतागतिपीडिताङ्गरोगेण वा व्रणनिपीडितक्षीणदेहात्
क्रोधातिशोकानशनादिभयोपवासैः सञ्जायते च मनुजस्य महागदोऽयम्
१०५

वार्द्धक्याद्यो भवति नितरां ज्याधनुःकर्षणेन भारात्यर्थं भवति हननोत्पातब-
न्धेन युद्धात्
दूराध्मानात्कदशनवशाच्चिन्तयातिव्यवायात्सम्भूतिः स्यान्मनुजबलहृद्राज-
यक्ष्मेतिसंज्ञः १०६

क्षतक्षयाच्छ्रमाद्वापि सहसोपप्लवादपि
व्यवायातिप्रसङ्गेन तथा रूक्षातिसेवनात् १०७

तेन संक्षीयते गात्रं ज्वरो मन्दश्च जायते
ज्वरान्ते जायते शोफो मलविट् चातिमूत्रता १०८

अतिसारश्च भवति भक्षणेनातिशेषते

कासते ष्ठीवतेऽत्यर्थं शोषञ्च कुरुते भृशम्  १०९

स्त्रियोऽभिलाषतात्यर्थं वार्त्तायाद्विषता पुनः
राजयक्ष्मेति विज्ञेयो गदः साध्यो न विद्यते  ११०

सुप्तौ पादौ भवेतां तु ग्रासञ्च बहु मन्यते
शब्दे च पटुता यस्य राजयक्ष्मा न जीर्यति  १११

यदन्नं यत्समाहारं यादृशं प्रतियाचते
तत्तस्य च प्रदातव्यं मधुरं घनमेव च  ११२

यद्यदाहारमिच्छेद्वा नरं वा राजयक्ष्मिणम्
तस्य तस्यास्य लाभेन क्षीयन्ते धास्य धातवः  ११३

यदा सरक्ताः शोफाः स्युः पाकतां याति मानवे
तदा पुनर्नवाक्वाथः सलेशः प्रविधीयते  ११४

सञ्जीवेच्चतुरो मासान्षरामासं वा बलाधिकः
उत्कृष्टैश्च प्रतीकारैः सहस्राहं तु जीवति  ११५

सहस्रात्परतो नास्ति जीवितं राजयक्ष्मिणः
गतप्राणौजोवीर्यश्च क्षीणश्च विकलेन्द्रियः  ११६

न भवेत्पुनरुच्छ्रायो याप्यरोगश्च मुञ्चति
यस्तदायाससम्पन्नो भूयोऽपि कासना भवेत्  ११७

तस्य प्राणापहारी स्याद्राजयक्ष्मातिदारुणः
त्रिभिर्मासैश्च षरामासैर्वर्षैश्चापि त्रिभिः पुनः  ११८

शतमूलीरसे प्रस्थं गुडूचीकल्कप्रस्थकम्
हरीतकीशतानां च कुटजस्य त्वचा तुलाम्  ११९

निष्क्वाथ्य च पृथक्त्वेन पूतनाञ्चैकत्र मिश्रयेत्
दार्वीप्रलेपनं कृत्वा गुडानां शतपञ्चकम् १२०

सिता चामलकीचूर्णं त्वगेला चित्रकं शठी
द्राक्षा कुष्ठं शिलाजिच्च शिलाभेदस्तु तालकम् १२१

योज्यं तत्राक्षमानेन भक्षयेच्छुद्धसर्पिषा
तस्योपरि पिबेत्क्षीरं भोजनञ्च ततः परम् १२२

राजयक्ष्मी लभेत्सौख्यं पाराडुकामलकाञ्जयेत्
अतीसारं विनश्यति बले नागबलो भवेत् १२३

तालकं च शिलाभेदस्तथा चैव शिलाजतुः
क्षीरके द्वे समङ्गा च कुष्ठं नागबला बला १२४

एलापत्रकतालीसं तमालं हरिचन्दनम्
मुस्ता द्राक्षा च रास्ना च मुराडी शैलेयकं पुरः १२५

सुरसा चैव संयोज्या तिलाः कृष्णा द्विभागिकाः
चूर्णं सूक्ष्मं प्रयुञ्जीत गुडेन मधुना युतम् १२६

पश्चाद्गोक्षीरपानं स्यात्क्षीरेण सह भोजनम्
राजयक्ष्मादिभिः क्षीणा ग्रहणीपीडिताश्च ये १२७

धातुक्षीणबला ये च तेषां संयोजयेद्भृशम्
वृद्धोपि तरुणो भूत्वा नरो नार्याभिनन्दति १२८

बन्ध्यापि लभते पुत्रं षराढोऽपि पुरुषायते
तालकाम्रातकं नाम कृष्णात्रेयविभाषितम् १२९

गुडूची च बले द्वे च धात्री च मरिचानि च

चूर्णं गुडेन संयुक्तं राजयक्ष्मापहं नृणाम्  १३०

शालिषष्टिकगोधूमवास्तुकं जाङ्गलानि च
मुद्गांश्च गोपयश्चैव शशकैणकुरङ्गिणाम्  १३१

तित्तिरक्रौञ्चलावानां वार्त्ताकपिच्छकच्छागलानां हि
कथितानि मांसादीनि प्रलेपकानि जगति च  १३२

विभोजयेत्क्षीरसर्पिः क्षये वा राजयक्ष्मिणः
क्षाराम्लकटुकं तीक्ष्णं तैलं सौवीरकं सुरा
राजिकावर्जिताश्चैते क्षये वा राजयक्ष्मिणः  १३३

इत्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने क्षयरोगचिकित्सा नाम नवमोऽध्यायः  ९

दशमोऽध्यायः

अतिघर्मतया वापि तीक्ष्णोष्णकटुसेवनात्
क्षाराम्लसेवनाद्वापि मद्यपानादिसेवनात्  १

अतिव्यवायाच्छीतेन शुष्कशाकादिसेवनात्
एतैस्तु कुपितं पित्तं रक्तेन सह मूर्च्छितम्  २

पुत्रस्तु संशयापन्न पप्रच्छ पितरं पुनः  ३

हारीत उवाच
कथं पित्तं प्रकुपितं केन वापि प्रचाल्यते
तद्वद्रक्तं प्रकुपितं जायते केन हेतुना  ४

युगपद्दृश्यते केन कथं वापि प्रवर्त्तते
एवं पृष्टो महाचार्यः प्रोवाच मुनिपुङ्गवः  ५

आत्रेय उवाच

शृणु प्राज्ञ महातेजश्चिकित्सागमपारग
येनैव कुप्यते पित्तं रक्तं तेनैव कुप्यते ६

तावत्प्रकुपिते कोष्ठे वायुर्दारयते भृशम्
ऊर्ध्मं च नयते प्राणश्चापानोऽपानमीरति ७

मध्ये समानः कुरुते रक्तपित्तस्य कोपनम्
एवं युगपत्पित्तञ्च रक्तेन सह कुप्यति ८

चतुर्द्धा दृश्यते कोपो गतिश्चास्य द्विधा मता
ऊर्ध्वश्लेष्मणि संसृष्टं नासास्ये कर्णरन्ध्रयोः ९

रक्तं प्रवर्त्तते यस्य साध्यास्तु विजिगीषुणा
अधोयातेन संसृष्टं गुदेनापि प्रवर्त्तते १०

स ज्ञेयो रक्तपित्तस्तु कृच्छ्रेण सिद्धिमिच्छति
उभाभ्यामधऊर्ध्वाभ्यां वातश्लेष्मणि वर्त्तते ११

तमसाध्यं विजानीयात्कृच्छ्रेण यदि सिध्यति १२

एकमार्गबलतो वा नाभिवेगेन चोत्थितः
रक्तपित्तः सुखेनापि साध्यः स्यान्निरुपद्रवः १३

एकदोषानुगः साध्यो द्विदोषो याप्य उच्यते
असाध्यस्तु त्रिदोषेषु रक्तपित्तः प्रवर्त्तते १४

ऊर्ध्वगरक्तपित्तेषु विरेकं कारयेत्सुधीः
अधोभागगते रक्ते तदास्य वमनं हितम् १५

रोगक्षीणे छविरविकले हीनदौर्बल्यकाये
मन्दाग्निर्वा क्षवथुरथवा पाण्डुता दाहशोषः ।

तृष्णा छर्दिः श्वसनमधृतिर्भक्तविद्वेषमोहो
हृत्पीडा स्याद्भ्रममथ भवेद्रक्तपित्तोपसर्गात्  १६

अष्टादश इमे प्रोक्ता रक्तपित्तउपद्रवाः
उपद्रवैर्विना साध्योऽसाध्यः सोपद्रवस्तथा  १७

रक्तनिष्ठीवनोपेतो रक्तनेत्रो भ्रमातुरः
रक्तमूत्रश्च वमते रक्तमूत्री न जीवति  १८

एवं प्रोक्तो निदानार्थस्ततो वक्ष्यामि भेषजम्
सुलक्षणसमायुक्तं रक्तपित्तं सुखावहम्  १९

यस्यारुणं पवनफेनयुतं च तावत्पित्तातिकृष्णमथ पीतकुसुम्भकाभम्
पित्तेन पित्तमिति तं प्रवदन्ति धीराः सान्द्रं सपाण्डुरतिजं सघनं कफेन  २०

क्षीणमांसं कृशं वृद्धं बालं वा ज्वरपीडितम्
शोषमूर्च्छाभ्रमापन्नं नातिरेचनमाचरेत्  २१

निष्पीड्य वासारसमाददीत क्षौद्रेण खण्डेन युतं च पानम्
नासास्यकर्णे नयनप्रवृत्तं रक्तं तु शीघ्रं शमतां प्रयाति  २२

वासाकषायोत्पलमृत्प्रियंगुरोध्राञ्जनाम्भोरुहकेसराणि
पीत्वा समध्वा ससिता प्रयोज्या पित्ताश्रयं चैवमुदीर्णमाशु  २३

प्रविद्यमानं पिचुवासकेन कथं नरः सीदति रक्तपित्ते
क्षये च कासे श्वसनेऽपि यक्ष्मे वैद्याः कथं नातुरमादरन्ति  २४

भिषग्भिषजां माता वा पुरा कृत्य क्रिया यदि
क्रियायत्ते रक्तपित्ते क्षये कासे च सिद्धिदा  २५

वासायां विद्यमानायामाशायां जीवितस्य च

रक्तपित्ती क्षयी कासी किमर्थमवसीदति २६

तालीसचूर्णं वृषपत्ररसेन युक्तं पेयं समारभ्य पुनः कफपित्तकासे
हन्ति भ्रमं श्वसनकासतासङ्करोत्थं भङ्गस्वरे त्वरितमाशु सुखं ददाति २७

आटरूषकमृद्वीकापथ्याक्वाथः सशर्करः
क्षौद्राढ्यः श्वसनकासरक्तपित्तनिवारणः २८

छागं पयो वा सुरभीपयो वा चतुर्गुणश्चापि जलेन कल्कः
सशर्करं पानमिदं प्रशस्तं सरक्तपित्तं विनिहन्ति चाशु २९

बलाश्वदंष्ट्रामलकीफलानि द्राक्षा मधूकं मधुयष्टिकानाम्
सिद्धं पयः पानमिदं हितं स्यात्पित्ते सरक्ते मनुजस्य शान्त्यै ३०

खदिरस्य प्रियंगूनां कोविदारस्य शाल्मलेः
पुष्पचूर्णं तु मधुना लिह्यादारोग्यमस्तुते ३१

आटरूषकरसेन सप्तधा भाविता च पुनरेव शोषिता
पिप्पलीमधुसमन्विताभया रक्तपित्तमतिदुर्जयं जयेत् ३२

एलाफलानि सपद्मकनागकेशरं द्राक्षा घना मधुकपिप्पलिका समांशा
एषांसमांशसितशर्करयुक्तलेहः खर्जूरिका समभिहन्ति च रक्तपित्तम् ३३

दाहंज्वरार्त्तिश्वसनं च विमोहतृष्णां मूर्च्छांनिहन्ति रुधिरवमिजित्तथैव ३४

घ्राणे प्रवृत्तं रुधिरं यदि स्यात्तदा घृतेनामलकीफलानि
तोयेन पिष्ट्वा शिरसि प्रलेपः स रक्तपित्तं सहसा रुणाद्धि ३५

द्राक्षारसं वा घृतशर्कराढ्यं जलं सिताढ्यं च सरक्तपित्ते
यवान्न चैवेक्षुरसं सिताढ्यं क्षयं च कासं क्षतजं निहन्ति ३६

नस्यं विदध्याद्धरितालिकाया रसेन वालक्तरसेन वापि

स्याद्दाडिमस्य प्रसवोद्भवेन रसेन नस्यं रुधिरस्रुतेऽपि ३७

आम्रास्थिजम्बूद्भवशर्कराढ्यं नस्यं सिताढ्यं हितकृज्ज्वराणाम्
नासाप्रवृत्तं रुधिरं निहन्ति हिक्कासच्छर्दिश्वसनं विमर्दि ३८

पलाण्डुपत्रनिर्यासनस्यं नासाग्रजावहम्
यष्टीमधूमधुयुतं पश्चान्नस्येऽस्रजं जयेत् ३९

वासापत्ररसं विधाय मतिमान्योज्यानि चेमानि तु
रोध्रं चोत्पलमृत्तिकासमधुकं कुष्ठं प्रियङ्ग्वन्वितम्
चूर्णं पुष्परसेन पाचकमिदं पित्ताश्रयाणां हितं
कासकामलपाण्डुरोगक्षतजश्वासापमर्दि भवेत् ४०

रसो हितो दाडिमपुष्पकस्य तथैव किञ्जल्करसोत्पलस्य
लाक्षारसो वा पयसा च नस्याद् घ्राणप्रवृत्तं रुधिरं रुणद्धि ४१

यदि वदनपथेऽसृक्प्रवृत्ते तस्य कुर्यात्प्रतिविधिर्विहितः स्याद्बध्यते मानुषस्य
भवति न सुखसाध्यं लोहितं मानुषेषु तदनुयुवतियोन्यां रक्तवाहस्त्वसाध्यः
४२

मधु मधुकमुशीरं कञ्जकिञ्जल्कदूर्वारसमिह परिपीतं दाडिमस्य प्रसूतम्
मलयजसितकुष्ठं पद्मकं चैव बालं मधु मधुकबालकौ कोद्रवौ द्वौ समन्तात्
४३

समसुरभिपयो वा धावनं तण्डुलानां परिकलितसमग्रं तुर्यभागेन योज्यम्
लघुतरमपि वह्नौ धावितं सिद्धमेव भवति वदनवृत्ते लोहिते पानमस्य ४४

श्रुति पथमपि रक्ते वा प्रवृत्ते तु नासं विहितमपि तदा स्यात्पूरणं कर्णनासे
रुधिरमभिरुणद्धि श्वासमाशु क्षतं वा श्वसितरुधिरच्छर्दि मेहमुन्मादरोगम्
४५

नासाप्रवृत्ते नस्यं स्यान्मुखे पानं विधेयकम्
कर्णे नेत्रे पूरणं च गुदमार्गे निरूहणम्  ४६

दाडिमफलत्वचं वा चूर्णं लिह्यात्सितायुतम्
पद्मकिञ्जल्कचूर्णं वा लिह्याद्वा सितया पुनः  ४७

मुखप्रवृत्तरुधिरं रुणद्ध्याशु वमिं क्लमम्
श्वासशोषौ भ्रमं तृष्णां नाशयत्याशु निश्चयः  ४८

जम्ब्वाम्रपल्लवानि स्युर्हरीतक्या युतानि तु
मधुशर्करया युक्तमास्यलोहितवारणम्  ४९

वटप्रबालार्जुनवृक्षकदम्ब जम्ब्वाम्रकाणां खदिरस्य वापि
यथाप्रपन्नो मधुनावलेह आस्यस्रजं वारयते क्षणेन  ५०

शतावरी मधुकं बला च ससिता काकोलिका दाडिमा
मेदः क्षीरविदारिका च फलिनी स्यात्तिन्तिडीकं बला ।
सिद्धा गोपयसाज्यकं हितमिदं पाने तथा बस्तिषु
योनौ मेढ्रगुदप्रवृत्तरुधिरं हण्यात्सकासक्षयम्  ५१

मृद्वीका मधुकं विदारिवसुधा नीली समङ्गाफला
काकोल्यो बृहती युगं वृषमहामेदासितं चन्दनम् ।
जातीपल्लवपटोलश्यामामृतासञ्जीवकाः साभया
मेदे द्वे च कुचन्दनं मधुरसाः श्यामाः समांशास्त्वमी  ५२

पक्त्वा गोपयसा विशुद्धविधिना सिद्धं चतुर्थांशकं मत्स्यण्डी मधुकं च सिद्धिमिति चेत्पानं प्रशस्तं नृणाम् ।
स्त्रीणां चापि हितं निहन्ति रुधिरं पित्ताद्गुदे वा भवेन्मेढ्रे चापि च रोमकूप-कपथे वृत्तं निहन्त्यात्स्रजम्  ५३

एतद्द्राक्षाभिधानं घृतमपि विहितं रक्तपित्ते ज्वरे वा वातास्रे योनिशूले भ्रम-

मदशिरसोन्मादरक्तप्रमेहे ।
पित्ताम्लेऽतिकुष्ठे क्षयक्षतरुधिरे राजयक्ष्मेऽथ पाण्डौ पाने बस्तौ च नस्ये
हितमपि मनुजां भाषितं चात्रिणा च ५४

छल्लिं निष्कृष्य कूष्माण्डखण्डानि प्रतिकल्पयेत्
काञ्जिकेनाशु धौतानि पुनरेव जलेन तु ५५

पश्चात्क्षीररसप्रस्थे कल्कयेत्पुनरेव च
घृतेन पुनरेवैतत्पाचयेत्सुविधानतः ५६

यदा मधुनिभानि स्युस्तदा शर्करया सह
निधाय तत्र चेमानि भेषजानि प्रकल्पयेत् ५७

पिप्पलीशृङ्गवेराभ्यां द्वे पले मरिचानि च
जीरके द्वे तथा धात्री त्वगेलापत्रकं तथा ५८

पलार्द्धेन वियुञ्जीयाच्चूर्णं तत्र विनिक्षिपेत्
दार्व्या विघट्टयेत्तावल्लेहीभूतं यदा भवेत् ५९

तदा मधुघृतेनापि लिह्याज्ज्ञात्वाबलाबलम्
रक्तपित्तं क्षयं कासं कामलं नैमिकं भ्रमम् ६०

छर्दितृष्णाज्वरश्वासपाण्डुरोगान् क्षतक्षयम्
अपस्मारं शिरोर्त्तिञ्च योनिशूलं च दारुणम् ६१

चिरं योनौ रक्तवाहं मन्दज्वरनिपीडनम्
वृद्धोऽपि च युवा कामी वन्ध्या भवति पुत्रिणी ६२

अवीर्यो वीर्यमाप्नोति भवेत्स्त्रीणां प्रियो नरः
एष कूष्माण्डको लेहः सर्वरोगनिवारणः ६३

सुस्निग्धकूष्माराडकखराडकानि पलानि पञ्चाशदथो सितायाः
युञ्जयात्सतोयं प्रणिधाय धीमान् घृतेन प्रस्थं परिपक्वमेव ६४

विज्ञाय पक्वं पुनरेव तत्र वासाकषायञ्च विमिश्रयेच्च
पश्चात्पचेद्यावत्तु दर्वीलेपो ज्ञात्वा तु चेमानि पुनर्वियुञ्जयात् ६५

धात्री घना च भार्ङ्गी च सुगन्धत्रयं च युञ्जयात्समस्तानि तानि कर्षमात्राम्
तस्मात्पुनर्नवा च नागरधान्यकानि एषां पलस्य तुलिता कथितानुमात्रा ६६

श्यामापलाष्टकमिदं विदधीत चूर्णं सङ्घट्टयेत्सकलमेव पुनस्तु दर्व्या
युञ्जयात्समं मधुयुतं सकलामयघ्नं कासं ज्वरं क्षतजमाशु निहन्ति हिक्काम्
६७

हृद्रोगपित्तरुधिरं क्षयपीनसं च पित्ताम्लकं विजयते श्वसनं च मूर्च्छाम्
स्त्रीणां हितं भवति बालकवृद्धकेषु श्रेष्ठं समस्तरुजनाशबलप्रदं च ६८

शतावरी मुरिडतिकामृता च फलात्वक्च पुष्करमूलभार्ङ्गी
वृषो बृहत्या खदिरं च मांशली पृथक्पृथक् पञ्चपलैकमात्रया ६९

उत्तार्य पक्वं जलमाशु पश्चाद्यावद्भवेच्छेषमथैव पूतम्
विमूर्च्छितं तत्र निधाय धीमान्पलं तथा द्वादशमाक्षिकस्य ७०

तथाशु चूर्णस्य च लोहकस्य विघट्टितं खराडघृतेन तुल्यम्
देयं पलं षोडशकं विधिज्ञो विपाचयेल्लोहमये च पात्रे ७१

गुडेन तुल्योऽपि विभाति यावत्तुगा विडङ्गं मगधा च शुराठी
द्वे जीरके कराटकं त्रिफलानां भृङ्गं धान्यमरिचं सकेसरम् ७२

पलेन मात्रां विदधीत पृथक् सुघट्टितं चूर्णमिदं घृतस्य
स्निग्धे कटाहे प्रणिधाय युञ्जयात्कर्षप्रमाणं विदधीत चूर्णम् ७३

प्रभातकाले सरोवारिपानं गुरूणि चाम्लानि च वातलानि
भगन्दरादिश्वयथून्निहन्ति रक्ताम्लकं वा श्वसनञ्च यद्दिमणम्  ७४

विशोषणं कुष्ठरुजां च गुल्मान्बलप्रदं वृष्यतमं प्रदिष्टम्
स रक्तपित्तं सहसा निहन्ति योनिप्रभावं च सरक्तशूलम्  ७५

रक्तातिसारं रुधिरप्रमेहं समेढ्रबस्तौ निहितं नराणाम्
सौभाग्यदं कान्तिकरं प्रदिष्टं तेजौजःपुष्टिं बलमातनोति  ७६

रक्तातिसारे च प्रयोजनीयं रक्तप्रवाहे सरुजे सदाहे
फलत्रिकञ्च सविषा समङ्गा सपर्पटं दाडिमधातकीनाम्  ७७

चूर्णं मधुशर्करया समेतं तथैव दध्ना सघृतं सलेहम्
रक्तातिसारं रुधिरप्रवाहं सततं स्त्रियश्च  ७८

निवारयत्याशु हितं नराणां बालेऽतिसारे प्रशमाय योग्यम्  ७९

योनिप्रवाहे मधुकं समङ्गा एलादलं निम्बदलानि पथ्या
मुस्ता विशाला कटुरोहिणी च कल्को हितः शर्करया युतोऽयम्  ८०

योनिप्रवाहं विनिवारयेच्च सयोनिशूलं सरुजां तृषार्त्तिम्
एला समङ्गा सहशाल्मलीनां हरीतकी मागधिका समांशा  ८१

क्वाथोदितः शर्करया समाध्व्या योनिप्रवाहं विनिवारयेच्च  ८२

घर्मातपान्ते च विदाहि चाम्लं सौवीरकं वा कटुकं कषायम्
क्षारं सुरा वा परिवर्जनीयं सरक्तपित्ते मनुजे हिताय  ८३

वास्तूकचिल्ली सुनिषण्णकञ्च जीवन्तिका वा शतपुष्पिका वा
शाका हिता रक्तमेव च पित्ते मुद्गास्तथा लोहिततण्डुलाश्च  ८४

यवगोधूमचणकाः कोशातक्यः पटोलकम्

मुद्गा माषा हिताश्चैव रक्तपित्तनिवारणे ८५

हरिणशशकलावास्तित्तिरास्ते कुलिङ्गाः
ककेरा अपि मयूराः क्रौञ्चपारावतानाम्
पललमनिलपित्तबर्हणं वै हितञ्चेद्भवति बलममोधं सत्त्वतेजश्च कान्तिः ८६

इत्यात्रेयभाषिते हारीतोत्तरे तृतीयस्थाने रक्तपित्तचिकित्सा नाम
दशमोऽध्यायः १०

## एकादशोऽध्यायः

आत्रेय उवाच
अथातो वक्ष्यते पुत्र अर्शस्य च चिकित्सितम्
षट्प्रकारेण ये प्रोक्तास्तेषां च शृणु लक्षणम् १

जाता दोषैस्त्रिभिरपि वातपित्तकफादिकैः
सन्निपाते चतुर्थः स्यात्पञ्चमो रक्तसम्भवः २

षष्ठकः सहजो ज्ञेयश्चार्शसां षड्विधो भवः
एवं च षट्प्रकारेण जायन्ते गुदजा रुजः ३

अनशनलघुरूक्षाहारसंसेवनेन कटुलवणविदाहिसेवया वातरोधात्
भवति सततवीप्सा विष्टरेणैव हीना कुपितमरुतवेगादर्शसां भूतिरासीत् ४

अनशनोपविष्टस्य मलमूत्रावधारणे
शीतसंसेवनेनापि गुदजः सम्प्रकुप्यति ५

लवणकटुकषाया तिक्तसंसेवनेन अमितलघुतरभोज्याच्छीतलेनातिरोधात्
कुपितमलिननामापानमार्गेष्वपाने सृजति रुधिरवातोपानमार्गे मरुत्सु ६

कट्वम्ललवणोष्णानि विदाहीनि गुरूणि च
सेवनानिलतोयेन श्रमाद्व्यायामपीडया

यानव्यवायदोषाद्वा दुर्नामा पित्तसम्भवः ७

अव्यायामात्तस्य शीलादजस्रं शीताद्वान्याद्वातसंसेवनाच्च
लौल्यात्यम्लात्तैलसम्पिच्छलेन दुर्नामा सञ्जायते श्लेष्मरोगात् ८

शीतत्वतोदं परुषं विनिद्रा गुल्मोदराष्ठीलविषूचिकावा
शोफावुभौ कृष्णनखस्य नेत्रे लिङ्गानि वातप्रभवार्शसानाम् ९

दाहभ्रमौ ज्वरपिपासिशरीरतो वा मूर्च्छारुचिर्नयनदन्तमुखानि यस्य
पीतच्छविर्भवति वा विटभेदनं च पित्तेन जातगुदजस्य च लक्षणानि १०

निद्रा च जाडयधनमन्दरुजा च शोफा शूलातिगुल्मगुदभंगुरकास्तथा स्युः
विड्बन्धतोदमरुचिर्गतिमन्दता च श्लेष्मोद्भवा गुदरुजः खलु भेषजज्ञ ११

शूलानाहारुचिः कासो हृल्लासो रुचिनोदता
स्कन्धयोर्जाडयता सर्वाश्चार्शसि सम्भवन्ति हि १२

गुदजलक्षणं वक्ष्ये गदे कण्डूरसृक्स्रवः
परुषा विषमा दीर्घा वातेन गुदजा मताः १३

सदाहाश्च विचित्राश्च पीता नीलावभासिकाः
लोहितं स्रवते सोष्णं पित्तेन गुदजा मताः १४

सदाहा कठिना ये तु तत्र पाको विबन्धता
शीतकण्डूसमस्थूलाः कफेन गुदजा मताः १५

सदाहाः सरुजः श्यावाः कण्डूः शोषश्च जायते
स्रवते सततं रक्तं ते कण्ड्वासृग्भवार्शसाः १६

धान्याङ्कुरसमाकाराः क्रिमयः सम्भवन्ति च
वातवर्च समा लिङ्गा गुदजाः सम्भवन्ति हि १७

वक्रास्तीक्ष्णाः स्फुटितवदना दीर्घबिम्बीफलाभाः केचित्सिद्धार्थककणनि-
भाः कालखर्जूरकाभाः ।
कर्कन्ध्वाभाः कलम्बकसमाः केचिदम्भोजबीजा वायोश्चासौ मनुज विहितः
सम्भवश्चार्शसां च १८

गुदे नासाकर्णरन्ध्रे मुखे वा तथावर्त्तनेत्रान्तरयोनिमध्ये
नराणां सकाशे भवन्ति रोगा न साध्याः सुखेन क्रिया यत्नतः स्यात् १९

त्रिवलीगुदमध्ये तु बाह्यतोऽभ्यन्तरेषु च
अर्शसां तु विजानीयात्त्रीणि स्थानानि चैव हि २०

बाह्यतः सुखसाध्यः स्यान्मध्ये कष्टेन सिध्यति
असाध्योऽन्तर्बलीजातो गुदजो भिषजां वर २१

प्रलेपवर्त्तिभिः स्वेदैर्बाह्याः सिध्यति चोत्तमाः
यन्त्रशस्त्रेण मध्यास्तु अन्तर्जाश्चान्तरौषधैः २२

तस्मात्पुत्र प्रयत्नेन क्रिया कार्या विजानता
येनातुरस्य रक्षा स्याद्येन रोगो निवर्त्तते २३

करचरणमुखे वा नाभिमेढ्रे गुदे वा भवति हि यदि पुंसां शोफशोषो ज्वरश्च
श्वसनतमकच्छर्दिर्मोहहृत्पार्श्वशूलं कृशमरुचिविबन्धश्चातिसारोपसर्गाः २४

इत्येवं द्वादशार्शसां सम्भवन्ति ह्युपद्रवाः
उपद्रवैर्विना साध्या न साध्या बहूपद्रवाः २५

शूलारोचकतृष्णार्त्तश्चातिरक्तप्रवाहवान्
शूलशोफातिसारार्त्तो ध्रुवं न जीवतेऽर्शसः २६

अतोर्शसां प्रवक्ष्यामि क्रियां चैव भिषग्वर वटकाक्षारशस्त्राणि येन सम्पद्यते
सुखम् २७

अर्शसां च क्रियाः प्रोक्ताश्चार्शघ्ना बलवर्द्धनाः
पित्तशोणितशमना न च वातप्रकोपनाः  २८

तस्यादौ पचनं श्रेष्ठं ततो भेषजमाहरेत्
पथ्यामृता च धनिका पाने क्वाथो गुडान्वितः  २९

दन्ती विडङ्गमगधा धान्या भल्लातकगुडं तिलकुष्ठयुक्तम्
संसिच्य पयसातिकल्को निहन्ति पाने गुदजांश्च रोगान्  ३०

नागरपिप्पलीबिल्वविडङ्गं दन्ती च शठ्यभया त्रिवृता च
कल्कमिदं सगुडं प्रतिपाने वार्शसि नाशनकारि नराणाम्  ३१

पत्रककेसरशुण्ठीसमैलातुम्बुरुधान्यविडङ्गतिलानाम्
क्वाथो हरीतकीसर्पिर्गुडेन पीतो निहन्ति गुदे गदजानि  ३२

पिप्पलिकामभयां गुडयुक्तां प्रातर्भवे नरो भद्मति चैताम्
तस्य गुदकीलकमाशु हन्ति सकामलपाण्डुजरोगवर्गान्  ३३

सुस्विन्नवार्ताकफलस्य तोयं दध्ना सिताह्वा सलिलामृतेन
पाने विधेयं गुदकीलकानां क्रिमीन्निहन्यात्क्रिमिजांश्च रोगान्  ३४

भल्लातकाः कृष्णतिलाश्च पथ्या चूर्णं गुडेनापि नरस्य सेव्यम्
हन्याच्च पाने गुदकीलमेहशूलार्शकासान् विनिहन्ति तस्य  ३५

सूरणकन्दकमर्कदलैस्तु वेष्टितमेव हि कर्दमलिप्तम्
तप्तमनलवर्णकसमानं तत्पयःसैन्धवतैलविमिश्रम्  ३६

भद्मति चार्शविनाशहेतोर्वातविकारहितोऽपि नरस्य  ३७

चित्रकपुष्करमूलशठीनां तेषु समांशास्तिला विनियोज्याः
सूरणकन्दकखण्डसमेतं तेषु समोऽग्निकफलानि दध्यात्  ३८

सैन्धवं तस्य चतुर्गुणकञ्च भावितमर्कदलेन समस्तम्
तञ्च घृतस्य घटे विनिधाय अरण्यगोमयवह्निविपक्वम्  ३९

क्षीरमिदं लवणघृतपक्वं तक्रयुतं प्रतिपानमतोऽपि
नाशयति गुदकीलककीलान्हन्ति विषूचिभगन्दरानपि  ४०

कामलपाण्डवानाहविबन्धान्गुल्ममरोचकनाशनकारी
मूत्रगदगलकण्डुक्रिमीणां नाशनभद्रकसैन्धवो नाम  ४१

त्रिकटुकमगधानां मूलचित्रं त्रिगन्धं समतुलितममीषां तुल्यभल्लातकानि
समलमिह समन्तादेकतः सम्प्रचूर्ण्यं द्विगुणतुलितमात्रं योजनीयोगुडस्तु  ४२

सकलमपि विकुट्य स्निग्धभाण्डे निधाय प्रतिदिनमपि सेव्यं चाक्षमात्रं सुधीरैः ।
गुदजजठररोगं शूलगुल्मान्क्रिमींस्तु जनयति वडवाग्निं हन्ति पाण्डुं क्षयं वा
४३

नागरं त्रिफलां चैव पलांस्त्रींश्च प्रयोजयेत्
चतुष्पलानि मरिचानां पिप्पलीनां पलद्वयम्  ४४

पलमेकं तु चव्यस्य योज्यं तत्र भिषग्वरैः
तालीसार्द्धं पलं देयं पलार्द्धं पद्मकस्य च  ४५

जीरकस्य समं मात्रा समेन तुलितो गुडः
सुपक्वा सुघना श्यामा पिप्पलीनां शतत्रयम्  ४६

उलूखले क्षोदयित्वा स्निग्धभाण्डेन धारयेत्  ४७

अक्षप्रमाणा गुटिका नराणां प्रातः प्रदेया सकलामयघ्नी
निहन्ति चार्शांसि च पाण्डुरोगं हलीमकं कामलकं भ्रमं वा  ४८

गुल्मातिसारं च सरक्तपित्तं क्षयं क्षतं चाक्षयमस्य यक्ष्मा
जीर्णज्वरारोचकपीनसानां हितो भवेत्प्राणदमोदकोऽयम्  ४९

जाजीपिप्पलिमूलकोलमगधापथ्याग्निकं नागराः सूक्ष्मैला च पलद्वयेऽपि क्रमशः कृत्वा पलैः सैन्धवम्  ।
भल्लातक्यफलानि पञ्चशतकं तेन समस्तेन गु द्वैगुण्येपि पुराणसूरणस्ततः सर्वस्य तुल्यो गुडः  ५०

क्षोदित्वा वटकाक्षमात्रमुपरि जातो विशेषो गुणः कुर्वत्यर्शनिवारणं क्षयमपि पुष्टं तथा सुप्रभम्  ।
मन्दाग्निर्वडवासमो भ्रमहरो हृद्रोगपाण्ड्वामयं शूलानाहभगन्दरो भयहरो दुष्टार्त्तिनिर्वासनः  ५१

कृतोऽप्यर्थे विकारोऽपि ऋषिणा योगयुक्तिना
काङ्कायनेन मतिमान् तेन सौख्यमभीप्सति  ५२

लवणोत्तमं वह्निकलिङ्गवचा चिरबिल्वमहत्पिचुमन्दयुतम्
पिब सप्तदिनं समस्तु लुलितं यहदि मर्दितुमिच्छसि पायुरुजाम्  ५३

विश्वोपकुल्यामरिचानि केसरं पत्रं लवङ्गैलकवृद्धिमाह्वयाः
चूर्ण हितञ्च शर्करयुक्तमेतद्गुदामयानामुदरार्त्तिशान्तये  ५४

सनागरं पुष्करवृद्धदारुकं गुडो नवो मोदकमम्बुदारुकम्
अर्शेषु दुर्नामकरोगदारकं करोति वृद्धं सहसैव दारकम्  ५५

त्रिकटुकमभयानां पुष्करं चित्रकाणां कृमिरिपुतिलचूर्णं कारयेत्संगुडेन
उषसि वटकमेकं भक्षयेद्यो मनुष्यो विनिहितगुदरोगश्चाग्निवृद्धिं करोति  ५६

मरिचं नागरचित्रं सूरणभागोत्तरेण संकुटच
सर्वसमो गुडयुक्तो मोदको बिल्वप्रमाणं सेवेत्
विनिहितपित्तविकारं क्षयति मनुजानां करोति तनुपुष्टिम्  ५७

त्रिसमगतसूरणकन्दो लोहितवर्णेन यो भवेन्मतिमान्
षट्खण्डीकृतवानपि संशुष्कान्षोडशान्भागान् ५८

त्स्यार्द्धेन तुलितश्चित्रकशुण्ट्यौ च तत्र संयोज्या
मरिचस्य चैकभागो गुडेन बद्धस्तु मोदको मनुजैः ५९

भक्षित एव हि गुणवान्निहन्ति सकलान्गुदामयान्
त्वरितमग्नेर्दीपनमुक्तं गुल्मानां जठररुजाम् ६०

त्रिफलमगधजानां मूलतालीसपत्रं क्रिमिरिपुमगधानां पुष्करं चेत्समांशः
मरिचदहनभागश्चैकभागेन शुण्ठी सकलतुलिततुल्यः सूरणस्यैकभागः ६१

मदनचपलयुक्तं वृद्धदारैलभृङ्गं कृतमिह परिचूर्णं द्विगुणो शीर्णखण्डः
कृतवटकमुखस्तु प्राश्नुते यो मनुष्यो हरति जठररोगं तस्य चाशु प्रकर्षम्
६२

गुदजरुधिरपित्तं कासमन्दाग्निशूलान् क्षयतमकहलीमान् कामलांश्च क्रिमींश्च
विदधति बलपुष्टिं दापयेच्चाशु मार्गे प्रबलयति हुताशं योगराजः प्रसिद्धः
६३

योगराजेन युञ्जीत स्मरणेनाप्यगस्त्यतः
अस्य योगस्य योगेन भीमोऽपि बहुभक्षकः ६४

चव्यं पाठा त्रिकटु मगधा मूलकस्तुम्बुरूणां बिल्वाजाजीरजनिसुरसा
पथ्यया सैन्धवं च ।
पिष्ट्वा चैतत्समगविघृतं पाचयेत्सुप्रयुक्तं पानाभ्यङ्गे हरति
गुदजान्वातरोगाश्मरीं च ६५

श्यामा कुष्ठं मधुकमदनं पुष्पकं चित्रकञ्च बिल्वं दारु प्रतिविषशताह्वाक-
लिङ्गाशठीनाम् ।
पिष्ट्वा तैलं द्विगुणपयसा पाचितं चानुवासे चाभ्यङ्गे वा हितमपि

गुदव्याधिनिर्णाशहेतोः ६६

वातव्याधिश्रवणरुधिरे कर्णशूलेऽश्मरीणां जङ्घापृष्ठे कटिशिरःशिरावेक्षणे वाततोदे ।
विष्ठाबन्धग्रहनिग्रहनिःसारके मूढगर्भे श्रेष्ठं तैलं
सकलनिचयव्याधिसंधारणेन ६७

मुस्ता विश्वविडङ्गचव्यकशठी पथ्या च तेजोवती दन्तीन्द्रात्रिवृता समांश-कपली मात्रा च प्रत्येकशः ।
तस्माच्चाष्टपलान् पुरुष्करमपि षड्वृद्धदारोपलान्
युञ्ज्यात्षोडशसूरणाख्यसलिल द्रोणेऽखिलं फल्कितम् ६८

भूतं भूयः पचेद्गुडत्रिगुणितं युञ्ज्याद्धवेद्वादिनमुद्धृत्य पुनरेव चित्रकत्रिवृत्तेजो-वती सूरणम् ।
एलापत्रकनागकेशरलवङ्गानां समं चूर्णितमेषां षोडशभागयोग्यविहितं
सर्वञ्च तं चैकतः ६९

स्थाप्यं स्निग्धघटे प्रभातसमये भक्षेदक्षमात्रं वटं जीर्णे क्षीरमपि प्रभूतमति-मान् पाने तथा भोजने ।
अर्शोगुल्मभगन्दरान् ग्रहणीपाण्डुरोगं च कामलां शूलञ्चाथ
विबन्धकासक्षतजराजयक्ष्मान्निहन्ति ७०

भल्लातकानां द्विसहस्रकाणां द्रोणे जले पाच्यपदावशेषम्
क्वाथे तु तस्मिन् विपचेद्गुडस्य तुलाप्रमाणं पुनरेव तत्र ७१

भल्लातकानां शतपञ्चकानि तत्रैव संयोज्य पलत्रिकं वा ।
व्योषं जवानीघनसैन्धवानामेलालवङ्गं दलनागकेशरम् ।
प्रत्येककर्षं तुलितं नियोज्यम् ७२

संकुटय्य तैले घृतभाजने वा स्थाप्यं प्रभाते वटकप्रमाणम्
भक्षेद्गुडं स तु निहन्ति रोगान्भगन्दरार्शःक्रिमियक्ष्मपाण्डून् ७३

गुल्माश्मरी मेहहलीमकं वा सरक्तपित्तं ग्रहणीं निहन्ति
करोति पुष्टिं बलमातनोतिवर्णप्रकर्षं सुखमादधाति  ७४

दशमूलकगुडूचिसठीक्षुरकं सहचित्रकभार्ङ्गीफलासहितम्
भल्लातकपञ्चशतं प्रदिशेद्विपचेज्जलद्रोणमितेन च तत्  ७५

गुडजीर्णशतं प्रददेत्क्वथितमवतार्य सुशीतलमेलसमम्
दलकेसरभृङ्गलवङ्गयुतं कृतचूर्णमिदं सकलैकमिति  ७६

घृतभावितमेकदिनं विदधीद्धृतभाजनके दिनसप्तमिदम्
स्निग्धघटे विदधीत मनुष्यो दत्तमिदं गुदजामयसङ्घे  ७७

मोदकमेकमुषस्सु ग्रसेद्विनिहन्ति गुदामयमेहरुजः
हन्ति कासहलीमककामलकं हितमेव हुताशनदीप्तिकरम्  ७८

यस्तु शीतजले क्षिप्तो जलेनैव विलीयते
लोहितो लोहितां याति चैकपाको गुडस्य च  ७९

ग्रन्थिकं चित्रकं मुस्तं चविकं त्रिफलामृता
सहदेवी गजकर्णापामार्गश्च कुठेरकम्  ८०

प्रत्येकं चतुष्पालिकं कल्के द्रोणाम्भसा सुधीः
द्वे सहस्रे समे पिष्टं भल्लातक्याः फलाति तु  ८१

पादावशेषे कल्के च लोहचूर्णं तुलार्द्धकम्
क्षिपेत्कुडद्वयं सर्पिः सर्वं चैकत्र घट्टयेत्  ८२

फलत्रिकं तथा व्योषं चित्रकं लवणाष्टकम्
विडङ्गानि समांशानि सर्वाणि पलमात्रया  ८३

चतुष्पलं वृद्धदारोर्मूर्वाख्या तु चतुष्पला

संशुष्कसूरणं कन्दं चूर्णं चाष्टपलोन्मितम्  ८४

संक्षिप्य स्वादयेच्चूर्णमवतार्य सुशीतले
स्थापितं मधु संयोज्यं कुडवद्वयमात्रया  ८५

देयं गुदामये चादौ कल्कमप्रातराशने
अर्शांसि ग्रहणीरोगं कामलाराजयक्ष्मणः  ८६

गुल्मक्रिमीनश्मरीं च मन्दाग्निमेहशोणितम्
नाशयत्याशु यक्ष्माणं करोति बलमाकृतेः  ८७

आशु वृद्धिं प्रकुरुते वलीपलितनाशनम्
रसायनस्य योगेन नरो नागबलो भवेत्  ८८

रक्तार्शसामुपचारं वक्ष्यामि वृणु पुत्रक
प्रातस्तिलान्भक्षयेच्च नवनीतविमिश्रितान्  ८९

सितानागरकयुक्तं नवनीतं सशर्करम्
केशरं मातुलुङ्गस्य विडङ्गशर्करायुतम्  ९०

भक्षेत्कूष्माण्डकालेहं नवनीतेन शर्कराम्
एतेन रक्तगुदजाञ्छमयन्ति विचक्षणाः  ९१

समङ्गाशाल्मलीपुष्पं चन्दनं ककुभत्वचम्
नीलोत्पलमजाक्षीरं पिष्ट्वा पानमसृग्गदान्  ९२

कुटजमूलसकेसरमुत्पलं खदिरधातुकिमूलशृतं पयः
पिबति म्रक्षणयोगमसृग्भवं गुदजनाशनकारिविकारणम्  ९३

कुक्कुटस्य पुरीषञ्च तथा पारावतस्य च
ग्रहधूमं च सिद्धार्थं धत्तूरकदलानि च

